# सानन्दं नृत्यत, कैम्पको गीतं गायत!

"इदं दुग्धपूरितं मण्डसमन्वितं स्वादसंयुक्तं स्वप्नसमृद्धम्
मम प्रियतमं चॉकोलेटम् कैम्पको मण्डयुक्तं दुग्ध-चॉकोलेटम् !"

भारतस्य विशालतम नूतनतम संयन्त्रात्
कैम्पको लिमिटेड, मंगलूर




नई उमर के नये रंग
मौज ही मौज
स्कूल में आए
नए फ़ेविक्रिल
स्टूडेंट पोस्टर कलर्स
ऐसा रंग जमाएं
रंग मुलायम उभरा-उभरा
तोता-हरा-हरा लगे खरा
चटख लाल, नीला,
चमकीला
सफेद निराला ज्यों बर्फीला
हर रंग अलबेला
तो झटपट चित्रों में रंग भरो
नए फेविक्रिल स्टूडेंट
पोस्टर कलर्स के संग
मौज करो !
देख तुम्हारा काम और
इसका दाम मम्मी हुई हैरान !
मुफ़्त
पेंट-ए-पोस्टर
पाने के लिए इस पते पर लिखें–फ़ेविक्रिल, पो. बॉक्स 17437
अंधेरी (पूर्व), बंबई- 400 059.
नए
पिडिलाइट
फ़ेविक्रिल®
स्टूडेंट
पोस्टर कलर्स
फ़ेविकोल ब्राण्ड एड्हेसिव्स के निर्माता पिडिलाइट की ओर से
मुफ़्त
हर लिलिपुट किट
के साथ
स्टेन्सिल
Fevicryl
STUDENTS' POSTER COL
Fevicry
everest/91/PIL/117/HIN
कृपया
मेरे लिए
मुफ़्त
फ़ेविक्रिल पेंट-ए-पोस्टर
तुरंत भेज दें.
नाम :
उम्र :
पता :
स्कूल
CDM



MAGGI CLUBBERS FUN LOVERS
MAGGI CLUB
मैगी-जिगसा-पज़ल् इत्यनेन
सार्धं मैगी-पराक्रम-विश्वं सम्यक्
संयोजयन्तु।
मैगी-स्काई-ब्लेज़र इति भवतः
क्रीड़ायां घनेषु आरुह्य विहरन्तु।
मैगी-एस्-एड्वेन्चरर्स्
क्रीडायां सागरतो नभस्तलपर्यन्तं
आरोहणाभियानं पूर्णतां नयन्तु।
मैगी-हू-डन्-इट्- क्रीडायां चौरं
निगृह्णन्तु।
विनोदप्रियाणां कृते
आश्चर्यकराः पराक्रमाः!
मैगी-क्लब्- सदस्येभ्यः निःशुल्कं उपहाराः।
मैगी-रेडर्स-ऑफ-द-रेड्-स्टार
इति भवतः क्रीडायां चातुर्यपूर्णान्
अनभिज्ञान् विरुध्य भवतो
विनोदित्वं तोलयन्तु।
भो बालाः! मैगी-क्लब्-सदस्याः भवन्तु तथा
मैगी-जगतः पराक्रमेषु प्रविशन्तु।
एतत् केवलं मैगीनूडलस्-
रिक्त-पिष्टिकातः पञ्च-प्रथमावरणात् कर्तयित्वा
स्व-मनोनुकूलं उपहारमधिगन्तुं प्रत्येकं अस्मान्
प्रेषयन्तु। षट्सु अष्टसु वा सप्ताहेषु भवन्तो मैगीक्लबतः
भवद्रुचेः अनुकूलं आमोदभरितं लोभहर्षकं उपहारं
अवाप्स्यन्ति।
स्मर्तव्यमिदं यत् स्वमनोनुकूलोपहारेण सार्धं
स्वनाम-धामसंकेत-जन्मतिथि मपि अस्मान् प्रेषयन्तु।
यदि भवान् मैगी-क्लब्-सदस्यो नास्ति, तदपि भवतः कृते
स्वर्णिमोऽयमवसरः। यदा उपरितन - विवरणं प्रेषयति
भवान् तदा केवलं सदस्यतावाप्तये निवेदयतु। अपि च,
वयं भवतः उपहारेण सार्धं निःशुल्कं
मैगी-क्लब्-सदस्यतापत्रमपि प्रेषयिष्यामः।
निःशुल्कं मैगी 'वर्ल्ड आफ एनीमल्स' प्रश्नमाला।
प्रत्येकमपि उपहारद्रव्यं, यद् भवान् अधिगच्छति,
तेन सार्धं निःशुल्कं मैगी-'वर्ल्ड आफ एनीमल्स' -
प्रश्नमालामपि भवान् अधिगन्तुमर्हति।
अस्माकं संकेतोऽस्ति
MAGGI CLUB
P.O. Box 5788 New Delhi-110 055
अपरोऽपि उपहारः अधुनावधि यदि भवता मैगी-बर्डहाउस् नैव अवाप्तम् चेत् तदा सम्प्रति अवाप्नोतु!
MAGGI 2-Minute Noodles
HTA 7778SAN

# चन्दमामा

जुलै-१९९२

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ४-००

वार्षिकं ग्राहकशुल्कं रू. ४८-००

# चन्दमामा

संस्थापकः– 'चक्रपाणिः'    सञ्चालकः– 'नागिरेड्डी'


## मौल्याधारितं शिक्षणम्

यदा जुलैमासः आगच्छति तदा अग्रिमाध्ययनार्थं विविधविद्यालयान् महाविद्यालयान् वा गच्छतः छात्रान् पश्यामः। एषु दिनेषु वयं शृणुमः यत् 'मौल्याधारितं शिक्षणम्' इति, 'वृत्तिपरं शिक्षणम्' इति च। किम् एतयोः भेदः अस्ति? यद्यस्ति, तर्हि सः भेदः कीदृशः?

या शिक्षणपद्धतिः गुणान् सच्चारित्र्यं च अभिवर्धयति, या च मनसः सामर्थ्यम् अभिवर्ध्य विस्तारयति, या च बुद्धिं विकासयति, यस्याः च कारणतः कश्चित् स्वसामर्थ्येन परावलम्बनं विना जीवितुं शक्नोति, सा एव शिक्षणपद्धतिः 'मौल्याधारिता' इति उच्यते।

वृत्तिपरं शिक्षणं तु प्रथमं कञ्चित् वृत्तिप्राप्त्यर्थं चोदयात, ततः तं वृत्तितत्परं विधास्यति, ततश्च स्वनिमित्तं स्वपरिसरस्य च निमित्तं कार्यनैपुण्येन सर्वोत्कृष्टतां प्राप्तुं प्रेरयति।

एवम् उभयविधशिक्षणयोः मध्ये भेदः अत्यल्पः इति वक्तुं शक्नुमः। यतः यः वृत्तितत्परः भवति तेन शुद्धं चारित्र्यं रक्षणीयम् एव। नैतिकशक्तेः सङ्ग्रहः, बुद्धिशक्तेः तीक्ष्णीकरणं च तेन कृतं भवति एव। एतादृशः सहजतया जीवने दृढः तिष्ठति, स्वपरिसरस्य योग्यः सदस्यः भवति, समाजस्य आप्तं मित्रं भवति, देशस्य उत्तमाः प्रजाः भवति च।


सम्पुटः–९    जुलै–१९९२    सञ्चिका–४

प्रतिकृतिमूल्यं रू. ४-०० * वार्षिकं ग्राहकशुल्कं रू. ४८-००




रसप्रश्नाः–

# श्रीरामपट्टाभिषेकः

(रावणस्य हननस्य अनन्तरं श्रीरामः सीतां स्वसमीपम् आनायितवान्। 'भवती यथेष्टं यत्रकुत्रापि गच्छतु' इति रामेण यदा उक्तं तदा सीता वज्रेण आहता इव अभवत्। आत्मनः पावित्र्यं प्रमाणीकर्तुं सा अग्निप्रवेशं कृतवती। एतदनन्तरकालीनाः घटनाः आधारीकृत्य वाल्मीकिरामयणकथानुसारम् अधः केचन प्रश्नाः सज्जीकृताः सन्ति। युक्तम् उत्तरं जानन्तु।)

I. सीतायाः अग्निप्रवेशानन्तरं देवादयः तत्र प्रत्यक्षाः जाताः। देवेषु अन्यतमः श्रीरामं बोधितवान्– 'भवान् मानवमात्रं न, अपि ब्रह्मवस्तु भवान्' इति। एवं बोधयिता कः?

(अ) ब्रह्मा। (आ) इन्द्रः। (इ) महेश्वरः।

II. यदा इन्द्रलोकात् आगतः दशरथः अनुग्रहं कर्तुम् इष्टवान् तदा रामः कं वरं प्रार्थितवान्?

(अ) मृताः सर्वे वानराः उज्जीविताः भवन्तु इति।

(आ) भरतं कैकेयीं च शापः न स्पृशेत् इति।

(इ) कोऽपि वरः न प्रार्थितः, आशीर्वादमात्रं प्रार्थितम्।

III. अयोध्यां प्रति प्रस्थितः सपरिवारः श्रीरामः भरतदर्शनात् पूर्वं कुत्र वास कृतवान्?

(अ) भरद्वाजमुनेः आश्रमे। (आ) विश्वामित्रमुनेः आश्रमे।

(इ) गुहस्य प्रासादे।

IV. पट्टाभिषिक्तः श्रीरामः कं यौवराज्यपदे अभिषिक्तवान्?

(अ) भरतम्। (आ) लक्ष्मणम्। (इ) भरतं लक्ष्मणं चापि।

V. सीतया यदा मणिहारः दत्तः तदा हनूमान् किं कृतवान्?

(अ) सर्वान् मणीन् दष्ट्वा तेषु रामः अस्ति वा इति परीक्षितवान्।

(आ) सन्तोषेण कण्ठे धृतवान्, तावदेव।

(इ) उपायनं न इच्छामि इति वदन् हारस्वीकारं निराकृतवान्।

उत्तराणि–

I. – (अ). II. – (आ). III. – (अ). IV. – (अ). V. – (आ).

# मारिशस्द्वीपे नूतनः अध्यायः

इंग्लेण्डदेशीया महाराज्ञी इदानीं मारिशस्द्वीपस्य शासनाध्यक्षा न। वर्षस्यास्य मार्च्मासस्य १२ दिनाङ्के इतः आंग्लशासनं निवृत्तम्। एषः द्वीपः



स्वतन्त्रं गणतन्त्रराष्ट्रं जातः। किन्तु एषः देशः अपि भारतदेशः इव ब्रिटिश्राष्ट्रमण्डलस्य सदस्यः तिष्ठति।

इतः २४ वर्षेभ्यः पूर्वं– तन्नाम १९६७ तमे वर्षे– मार्च्मासस्य १२ दिनाङ्के मारिशस् आंग्लशासनात् मुक्तम् अभवत्। तथापि महाराज्ञ्याः प्रातिनिध्यं तु अनुवर्तमानम् आसीत्। तया नियुक्तः शासनाध्यक्षः (गवर्नर् जनरल्) शासनसूत्रं निर्वहति स्म।

एतस्य देशस्य प्रथमः प्रधानमन्त्री सर् शिवसागर् रामगुलाम्, यं च जनता राष्ट्रपितरं भावयति। ततः १९५७ तमे वर्षे अनिरुद्धः जगन्नाथः प्रधानमन्त्री जातः। एषः तत् पदम् अलङ्कुर्वन् उक्तवान् यत् मारिशस्देशं राष्ट्रमण्डलान्तर्गतं गणतन्त्रदेशं करिष्यामि इति।

१९८३ तमे वर्षे ऐदम्प्राथम्येन आंग्लेतरः कश्चित् एतस्य देशस्य शासनाध्यक्षः जातः। स च शिवसागर्



रामगुलाम् एव। १९८५ तमे वर्षे सः दिवंगतः।

अनन्तरकाले वीरास्वामी रिंगडू शासनाध्यक्षः जातः। १९८७ तमे वर्षे प्रवृत्तस्य निर्वाचनस्य अनन्तरं श्रीजगन्नाथवर्येण सम्मिश्रसर्वकारः रचितः। यदा एषः देशः गणराज्यम् इति घोषितं तदा अपि श्रीजगन्नाथवर्यः एव प्रधानमन्त्री अतिष्ठत्। वीरास्वामी राष्ट्रपतिः जातः, यश्च पूर्वं शासनाध्यक्षपदम् अलङ्करोति स्म। एतस्य गणराज्यस्य संविधानं भारतस्य संविधानम् एव अनुकरिष्यति। किन्तु एतस्य संसदः एकम् एव सदनं भवति।

एतस्य द्वीपस्य क्षेत्रफलम् १८६५ वर्ग कि.मी.। एतस्मात् अनतिदूरे मेडगास्कर्द्वीपः (यस्य क्षेत्रफलं

५,८७००० वर्ग कि.मी.) अस्ति। इतः पूर्वदिशि आफ्रिकादेशः अस्ति।

एवं हि विश्वस्यते यत् दशमे शतके कदाचित् अरबूनाविकाः एतं द्वीपम् अन्विष्टवन्तः इति। ततः ६०० वर्षाणाम् अनन्तरम् अत्र पोर्चुगालूजनाः आगताः। १६ शतकस्य अन्तिमे भागे डच्जनाः अपि अत्र आगताः। डच्जनाः अत्र कृषिवृत्तिम् आरब्धवन्तः। एतं द्वीपं वाणिज्यकेन्द्रं कृतवन्तः अपि। शतस्य वर्षाणाम् अनन्तरं ते इतः निर्गताः, फ्रेन्च्जनाः च अत्र आगताः। १८१० तमे वर्षे आंग्लजनाः अत्र आगतवन्तः, २५० वर्षाणि यावत् शासनं कृतवन्तः च। ततः एषः स्वतन्त्रः जातः।

मारिशस्देशस्य ६८% जनाः– तन्नाम ११ लक्षं जनाः– भारतीयमूलाः एव। अत्र शासकीयभाषा आंग्लभाषा फ्रेञ्चूभाषा च। किन्तु तमिळ्, हिन्दी, गुजराती, उर्दू, भोजपुरी च अत्र बहुधा उपयुज्यते जनैः। मारिशस्देशः नाम बहूनां लघुद्वीपानां समूहः। तादृशेषु सर्वेषु द्वीपेषु शिव-गणेश-सुब्रह्मण्यादीनां मन्दिराणि सन्ति। प्रतिवर्षम् अत्र 'तैपूसमूकावडी' 'चित्रकावडी' इत्येतौ उत्सवौ महता वैभवेन आचर्येते, यौ च लक्षशः जनान् आकर्षतः। अत्र नादस्वरवाद्यं (मद्रासीभेरी) थविल् (ढक्का) च वाद्यते भूयसा। महाशिवरात्रिः, होलिकोत्सवः, दीपावली च विशेषतः आचर्यते।

पर्यटकानां दृष्ट्या मारिशस्द्वीपः हिन्दमहासागरस्य रत्नम् इव अस्ति। एषः द्वीपः वानस्पतिकसम्पत्त्या अपि सुप्रसिद्धः अस्ति। अत्रत्यानि उद्यानानि 'पाम्पलेमूस्' नाम्ना आहूयन्ते। अत्र तादृशः कश्चन विशिष्टः वृक्षः अस्ति, यश्च षष्टिवर्षेषु एकवारं पुष्प्यति। अत्र तादृश्यः कुमुदिन्यः सन्ति, यासां च वर्णने वाक् पराहता भवति। अत्र एकं प्राचीनं ज्वालामुखीगह्वरम् अपि अस्ति, यस्य च मुखं २०० मीटर् विशालं, यस्य च गभीरता ५ मीटर्मिता।

मारिशस्द्वीपस्य सौन्दर्यं दृष्ट्वा नितरां सन्तुष्टः अमेरिकादेशीयः प्रसिद्धः कविः (१८३५-१९१०) एवम् उक्तवान् अस्ति– "मारिशस्द्वीपं दृष्ट्वा एव भगवता स्वर्गं सृष्टं स्यात्" इति।





# गृहे सामरस्यम्

शिवपुरनामके ग्रामे श्रीकण्ठः नाम वणिक् आसीत्। तस्य द्वौ पुत्रौ। ज्येष्ठः श्रीनाथः। द्वितीया श्रीवल्लीदेवी। श्रीनाथः यदा प्राप्तवयस्कः जातः, तदा पितुः साहाय्यं कुर्वन् वाणिज्यव्यवहारे निपुणः जातः। एतादृशाय व्यवहारकुशलाय कन्यां दातुं दूरप्रदेशतः अपि कन्यापितरः श्रीनाथम् अन्विष्य आगच्छन्ति स्म।

एकस्मिन् दिने श्रीकण्ठस्य पत्नी भानुमती पतिम् उक्तवती– "श्रीनाथः प्राप्तवयस्कः अस्ति इति भवान् जानाति। तस्य विवाहः करणीयः किल! भवान् किञ्चित् चिन्तयतु एतद्विषये" इति।

एतत् श्रुत्वा श्रीकण्ठः मन्दं हसन् उक्तवान्– "श्रीनाथस्य विवाहार्थं विशेषतया चिन्तनीयं किमपि नास्ति। सुदर्शनस्य पुत्री सुलोचना अस्ति एव। सा इदानीम् अष्टादशवर्षीया" इति।

एतत् श्रुतवत्याः भानुमत्याः मुखं म्लानम् जातम्। श्रीकण्ठः पञ्चदशवर्षेभ्यः पूर्वं वाणिज्यम् आरब्धवान् आसीत्। तस्य वाणिज्यस्य मूलधनं सुदर्शनेन दत्तम् आसीत्। सुदर्शनः श्रीकण्ठाय धनदानसमये– "एतत् ऋणम् इति मा भावयतु" इति पुनः पुनः उक्तवान् आसीत्।

तस्मिन् समये श्रीकण्ठः एवम् उक्तवान् आसीत्– "भाविनि काले भवतः पुत्रीं स्नुषात्वेन स्वीकृत्य ऋणात् मुक्तः भविष्यामि" इति।

किन्तु इदानीं सुदर्शनस्य आर्थिक-परिस्थितिः किञ्चिदपि समीचीना नास्ति। अतः तादृशस्य पुत्रीं स्नुषात्वेन आनेतुं न इच्छति भानुमती। किन्तु स्वस्य आशयं पत्युः पुरतः वक्तुं धैर्यं नास्ति तस्याः।

"अनामिका"



अनन्तरदिने श्रीकण्ठः भानुमती च पुत्रेण सह सुदर्शनस्य गृहं गतवन्तौ। श्रीनाथः सुदर्शनस्य पुत्रीं सुलोचनाम् इष्टवान्। सुलोचना अपि श्रीनाथम् अङ्गीकृतवती। अनन्तरं तयोः विवाहः संवृत्तः। सुलोचना पतिगृहम् आगतवती अपि।

षण्मासपर्यन्तं स्वकीयं सौभाग्यं स्मरन्ती सुलोचना सन्तोषेण कालं यापितवती। अत्रान्तरे अकस्मात् श्रीकण्ठः मृतः। अनन्तरं सुलोचनायाः कष्टदिनानि आरब्धानि। पितुः मरणकारणतः श्रीनाथस्य दायित्वम् अपि द्विगुणितं जातम्। अतः श्रीनाथः गृहे अधिककालं न तिष्ठति स्म। वाणिज्यव्यवहारकारणतः समये गृहम् आगन्तुं न शक्नोति स्म सः।

यदा श्रीनाथः गृहे न भवति, तदा भानुमत्याः श्रीवल्याः च निग्रहीता एव न भवति। ते द्वे अपि सुलोचनां पीडयतः। "धनिककुले जाताः बहवः आसन्। किन्तु निर्धनकुले जाता एषा स्नुषात्वेन आनीता। एतस्याः पाददोषस्य कारणतः एव मम पतिः दिवंगतः" इति स्नुषां निन्दति भानुमती।

"सत्यं मातः, प्रजावत्याः आगमनानन्तरं 'षण्मासाभ्यन्तरे एव गृहं श्मशानतुल्यं जातम्" इति वदति श्रीवल्ली।

इदानीं पाकशालायाः पूर्णदायित्वं सुलोचनायाः एव। पाककरणसमये प्रतिक्षणमपि निन्दनम् एव। सर्वदा श्वश्र्वाः

अतः सा पतिम् एवम् उक्तवती— "जीवने विवाहः प्रधानः घट्टः। एतादृशविषये 'भवान् एताम् एव परिणयतु' इति पुत्रं प्रति अनुरोधपूर्वकं कथनं न समीचीनं किल!" इति।

"विवाहविषये अनुरोधः समीचीनः न। न्याय्यः अपि न। अस्माकं श्रीनाथस्य तथा निर्बन्धं न करोमि अहम्। यदि सः सुलोचनां न इच्छति, तर्हि तेन इष्टां वधूं कन्याशुल्कं दत्त्वा वा स्नुषात्वेन आनेतुं सिद्धः अहम्" इति उक्तवान् श्रीकण्ठः। अनन्तरं ताभ्यां निश्चितं यत् श्रीनाथेन सह गत्वा वधूः द्रष्टव्या, श्रीनाथः ताम् अङ्गीकरोति चेत् अग्रिमं चिन्तनम् इति।

कोपयुक्तदृष्टिः। ननान्दा तु सुलोचनाम् उपहसति। सुलोचनायाः सन्तोषः एव नास्ति। सुलोचनाविषये किञ्चिदपि गौरवं नास्ति श्रीवल्लीदेव्याः। पाकविषये प्रजावत्याः साहाय्यं न करोति, अपि तु महाराज्ञी इव उपविशति, खाद्यवस्तूनि आनाय्य खादति। 'एतत् सर्वं यदि अहं पतिं वदेयं तर्हि तस्य खेदः स्यात्' इति चिन्तयित्वा मौनं तिष्ठति स्म सुलोचना।

एकस्मिन् दिने सुलोचनायाः महान् ज्वरः आगतः। शैत्येन कम्पमाना अपि सा हूँ हूँ कुर्वती एव कथमपि गृहकार्याणि सर्वाणि कृतवती। ज्वरस्य अपगमनानन्तरम् अपि तस्याः महती निश्शक्तिः आसीत्। तेषु दिनेषु एव श्वश्रूः ननान्दा च मिलित्वा कञ्चन कार्यक्रमं निश्चितवत्यौ यत् दशयोजनदूरे विद्यमानं देवालयं गत्वा आगन्तव्यम् इति।

भानुमती देवालयगमनपूर्वदिने रात्रौ सुलोचनाम् उक्तवती– "अहं श्रीवल्ली च श्वः प्रातःकाले एव देवालयं गच्छावः। अतः प्रातः शीघ्रम् उत्थाय मधुरभक्ष्यं चित्रान्नं च करोतु" इति।

अनन्तरदिने सुलोचना चतुर्वादने उत्थितवती। उत्थाय पाकशालां गन्तुम् उद्युक्ता सा। किन्तु द्वित्राणि पदानि यदा स्थापितानि तदा शिरोभ्रमणेन पतितवती। ललाटे व्रणः जातः। पतनशब्दं श्रुत्वा जागरितः श्रीनाथः बहिः आगत्य ताम् उत्थाप्य मञ्चे उपवेशयन् उक्तवान्– "एतावच्छीघ्रं किमर्थम् उत्थितवती?





-इतोऽपि प्रातःकालः न अभवत्" इति।

तदा सुलोचना उक्तवती– "अद्य श्वश्रूः ननान्दा च देवालयं गच्छतः किल। अतः शीघ्रम् आहारः सज्जीकरणीयः। तदर्थं शीघ्रम् उत्थितवती" इति।

"ह्यः एव ज्वरात् मुक्ता अस्ति भवती। कथं कार्यं करोति भवती? अहम् एव उपाहारं करोमि। तूष्णीं विश्रान्तिं स्वीकरोतु भवती" इति उक्त्वा सानुरोधं पत्नीं शाययित्वा श्रीनाथः पाकशालां प्रविष्टवान्।

किञ्चित्कालानन्तरं श्रीनाथः उपाहारं सज्जीकृत्य अनीतवान्। पत्न्याः समीपे उपाहारपात्रं दत्त्वा उक्तवान् च– "एतत् पात्रं भवती एव नीत्वा श्वश्रूसमीपे ददातु। अहं सज्जीकृतवान् इति मा वदतु। भवत्या एव कृतम् इति चिन्तयतु सा" इति।

पतिः यथा उक्तवान् तथैव कृतवती सुलोचना। अनन्तरं भानुमती श्रीवल्ली च शीघ्रम् एव शकटद्वारा प्रस्थितवत्यौ।

तस्मिन् दिने प्रातः श्रीनाथः यथासमयम् उत्थाय प्रातर्विधिं समापितवान्। पाकमपि सः एव कृतवान्। भोजनं कृत्वा कार्यार्थं बहिः गतवान्। सुलोचना किञ्चिदिव भुक्त्वा द्वारं पिधाय सुप्तवती। सम्यक् निद्रा आगता तस्याः। सायङ्काले द्वारताडनशब्दः श्रुतः। तदा जागरिता सुलोचना झटिति उत्थाय द्वारम् उद्घाटितवती। तत्र भानुमती श्रीवल्ली च कोपेन स्थितवत्यौ आस्ताम्। श्रीवल्ली कोपेन पृष्टवती– "कीदृशी प्रजावती भोः भवती? अस्मान् मारयितुं एतादृशम् आहारं कृतवती वा भवती?" इति।

"मध्याह्ने बुभुक्षया पीडिते आवां मधुरभक्ष्यं खादितुम् आरब्धवत्यौ। किन्तु तत् लवणमयम् आसीत्। चित्रान्ने तु पाषाणखण्डाः व्रीहयः च आसन्। एवं वा आहारसज्जीकरणम्? अस्मान् पीडयितुम् एव किल भवती एवं कृतवती? अस्मिन् गृहे भवत्याः का न्यूनता अस्ति? यथेष्टं सुवर्णम् अपि धृतवती अस्ति। किं भवत्याः मातृगृहतः आनीतम् वा तत् सुवर्णम्?" इति कोपेन उक्तवती भानुमती। तावति काले तत्र आगतः श्रीनाथः भानुमतीम् उक्तवान्– "सुवर्णं

मातृगृहतः आनीतम् अपि न, भवत्या दत्तमपि न। अहमेव कारितवान्'' इति।

''तद्विषये मम आक्षेपः नास्ति। किन्तु आवयोः विषये किमर्थम् द्वेषः सुलोचनायाः?'' इति कोपेन पृष्टवती भानुमती।

तदा श्रीनाथः उक्तवान्– ''पश्यतु मातः, इदानीं स्पष्टं वदामि अहम्। अद्य प्रातः आहारस्य सिद्धता मया एव कृता। एषा मातृगृहतः किमपि न आनीतवती इति कारणतः एतां कर्मकरीम् इव पश्यति स्म भवती। ज्वरकारणतः निःशक्तिः आसीत् एतस्याः। तथापि कार्याणि कारितवती भवती। माधुर्यमेव नास्ति चेत् मधुरभक्ष्यं रुचिकरं न भवति खलु? तद्वत् अस्माकं गृहम् अपि। स्नुषात्वेन आगतायां सुलोचनायां यदि प्रीतिः नास्ति तर्हि गृहे अपि सामरस्यं न भवति। यदि भवती श्रीवल्ली च एतया सह वासं न इच्छतः तर्हि आवाम् अन्यत्र गच्छावः। भवत्यौ एव अत्र वसताम्'' इति।

एतत् वचनं श्रुत्वा भानुमती श्रीवल्ली च लज्जां भीतिं च प्राप्तवत्यौ। तदा सुलोचना पतिम् उक्तवती– ''किमर्थम् अमङ्गलं चिन्तयति भवान्? आवयोः अन्यत्र वसतिः किं शोभते? अलं दुश्चिन्तनेन। अस्मत्सम्बद्धा समस्या एषा। पुरुषस्य भवतः प्रवेशः मास्तु एतद्विषये। भवान् स्ववाणिज्यव्यवहारं सम्यक् पश्यतु, तावता अलम्। माम् अनुक्त्वा विचित्रं पाकं सज्जीकृत्य एतौ खेदयन् समस्याम् उद्भावितवान् भवान्। अनुचितं कृतं भवता'' इति।

सुलोचनायाः हृदयवैशाल्यं दृष्ट्वा आत्मनः सङ्कुचितबुद्धिं स्मृत्वा च भानुमती श्रीवल्ली च लज्जाम् अनुभूतवत्यौ। परस्परप्रीतिः अस्ति चेदेव गृहस्य शोभा इति ज्ञातवत्यौ ते।

''श्रीनाथ, भवता सत्यम् उक्तम्। धनव्यामोहः आसीत् मम। गुणाः पूजास्थानम् इति अद्य अवगतं मया'' इति वदन्ती भानुमती अश्रूणि स्रावयन्ती सुलोचनां प्रीत्या आलिङ्गितवती।



# नौकाचालकस्य चयनम्

चन्द्रगिरिनामके ग्रामे कश्चन भूस्वामी आसीत्। तस्य गृहात् अनतिदूरे काचित् नदी प्रवहति स्म। नौकायाम् उपविश्य तस्यां नद्यां विहारः भूस्वामिने नितरां रोचते स्म। नदी पर्वतं परिक्रम्य वेगेन प्रवहति स्म। अतः भूस्वामी समर्थं कञ्चन नौकाचालकम् इच्छति स्म।

नाविकोद्योगं प्राप्तुं बहवः आगतवन्तः। भूस्वामिनः साहाय्यकः विविधैः प्रश्नैः तेषां परीक्षां कृतवान्। अन्ते अर्हौ द्वौ भूस्वामिनः समीपं नीत्वा– "श्रीमन्! एषः हालकः। नौकाचालने सुनिपुणः। तरणे अपि चतुरः। अन्यः एषः धीरजः। एषः नौकाचालने सुनिपुणः चेदपि तरणे समर्थः न" इति तयोः परिचयं कारितवान्।

"भवन्तौ श्वः आगच्छताम्। तदा मम निर्णयं श्रावयामि" इति उक्त्वा तौ प्रेषितवान् भूस्वामी। अनन्तरं साहाय्यकम् उक्तवान् सः– "श्वः यदा धीरजः आगमिष्यति तदा तं वदतु यत् भवान् उद्योगे नियुक्तः अस्ति इति" इति।

तदा साहाय्यकः आश्चर्येण पृष्टवान्– "श्रीमन्! तरणसमर्थं हालकं विहाय तरणे अप्रवीणं धीरजम् उद्योगे नियोजयन् अस्ति खलु? किमर्थम् एवम्?" इति।

तदा भूस्वामी मन्दहासपूर्वकम् उक्तवान्– "नौकाचालने तु उभौ अपि समर्थौ एव। हालकः तरणे अपि समर्थः। तरणे अपि यः चतुरः भवति सः नौकाचालने विशेषावधानयुतः न भवेत्। यतः 'अपायः यदि कदाचित् भवेत् तर्हि तरणेन आत्मरक्षणं करोमि अहम्' इति तस्य मनसि धैर्यं भवति। धीरजः तु तरणानभिज्ञः। अतः सः नौकाचालनसमये अल्पोऽपि अपायः यथा न भवेत् तथा जागरूकताम् आश्रयति एव। एतादृशः अस्ति चेत् ममापि अपायभीतिः न भविष्यति" इति।

"सत्यं श्रीमन्! भवता दूरालोचनं कृतम्। उभयोः अपि योग्यत्वं सम्यक् निर्णीतं भवता" इति तृप्त्या उक्तवान् साहाय्यकः।





# मायाभवनम् २

(वीरगिरिराज्यस्य राजकुमारी विद्यावती। प्रतिवर्षं तस्याः जन्मदिनोत्सवः सवैभवम् आचर्यते स्म। किन्तु एतस्मिन् वर्षे जन्मदिनोत्सवात् त्रिभ्यः दिनेभ्यः पूर्वं युवराज्ञी आज्ञातेन व्याधिना ग्रस्ता सती उत्थातुम् अपि अशक्नुवती शय्याम् आश्रितवती। प्रधानज्योतिषिकस्य वाचस्पतिमिश्रस्य सूचनायाः अनुगुणं राजा तां सरोवरमध्यस्थे विश्रान्तिभवने स्थापितवान्। तया सह वृद्धा परिचारिका स्थितवती। राजभवनतः एव तस्यै प्रतिदिनम् आहारः प्रेष्यते स्म। तदनन्तरम्.....)

राजकुमारी विद्यावती सारससरोवरस्थं विश्रान्तिभवनं प्रति प्रेषिता, किन्तु ततः अल्पे एव काले सा अदृश्या अभवत् इति तु ज्ञातम्। तस्याः घटनायाः विवरणम् एवम्–

वाचस्पतिमिश्रेण यथा सूचितं तथा राजकुमार्याः स्वास्थ्ये विशेषप्रगतिः दृश्यते स्म। शालिनी मालिनी च तां तत् भवनं प्रापय्य आगतवत्यौ आस्ताम्। ते एव अनन्तरदिने प्रातः आहारपानीयादिकं नीतवत्यौ। तीरस्थः नाविकः ते विश्रान्तिभवनस्य समीपं नीत्वा प्रत्यागतवान्। वृद्धपरिचारिकायाः कमलायाः मुखतः ताभ्यां ज्ञातं यत् राजकुमारी रात्रौ सम्यक् निद्रां कृतवती इति। सुखनिद्रा आरोग्यवर्धिका इत्यतः शालिनी मालिनी च सन्तुष्टे। राजकुमारी स्वयम् उत्थाय स्नानादिकं कृतवती। हसन्मुखी भोजनं कृतवती। एतत्सर्वं दृष्ट्वा तृप्तिं प्राप्य ते



राजभवनं प्रत्यागतवत्यौ। युवराज्ञ्याः आरोग्ये जायमानां प्रगतिं राजानं राज्ञीं च निवेदितवत्यौ। सन्तोषकरीम् एतां वार्तां श्रुत्वा राजा राज्ञी च नितरां सन्तुष्टौ।

द्वितीये दिने नन्दिनी देवयानी च युवराज्ञ्याः निमित्तम् आहारपानीयादिकं नीतवत्यौ। द्वितीये अपि दिने राज्ञा राज्ञ्या च सन्तोषकरी एव वार्ता प्राप्ता। तृतीये दिने शान्ता शारदा च आहारपानीयादिकं फलादिकं च नीतवत्यौ। ताभ्याम् अपि तृप्तिकरी एव वार्ता आनीता। एवं दिने दिने राजकुमार्याः आरोग्ये प्रगतिः दृष्टा इत्यतः राजा राज्ञी च सन्तृप्तौ। पुत्र्याः दर्शनं कदा वा लभ्येत इति चिन्तयन्तौ राजा राज्ञी च दिनानि युगम् इव यापयतः।

एवम् एव मासत्रयम् अतीतम्। प्रधानज्योतिषिकः वाचस्पतिमिश्रः राजदर्शनार्थं प्रासादम् आगतवान्। एतां वार्तां श्रुत्वा नितरां सन्तुष्टः राजा स्वयं गत्वा तम् आदरेण स्वागतीकृत्य उचिते आसने उपवेशितवान्।

चिन्ताक्रान्तौ राजदम्पती दृष्ट्वा वाचस्पतिमिश्रः मन्दहासपूर्वकम् उक्तवान्— "महाराज! श्वः भवद्भ्यां पुत्री द्रष्टुं शक्या। मध्याह्नानन्तरं कदाचित् गत्वा सूर्यास्ततः पूर्वं प्रत्यागन्तव्यम्" इति।

"पुत्र्याः मुखम् अदृष्टवत्याः मम त्रयः सप्ताहाः अतीताः। त्रयः सप्ताहाः त्रीणि वर्षाणि इव यापिताः। दिने सहस्रवारं तां स्मरन्ती अहं कथमपि दिनानि यापितवती" इति उक्तवती राज्ञी।

"श्वः पुत्री द्रष्टुं शक्या इति आचार्येण उक्तं खलु? अलं चिन्तया" इति राज्ञीम् उक्तवान् राजा।

अनन्तरं सः वाचस्पतिमिश्रं पश्यन्— "आचार्य! ग्रहाणां क्रूरदृष्टिः अपगता वा? जगत्पत्याचार्येण सह भवता समालोचनं कृतं वा?" इति पृष्टवान्।

"आं, समालोचनं कृतम्। मम आशयम् एव पुरस्कृतवान् अस्ति सः। इतः परं चत्वारिंशद्दिनानि यावत् कुग्रहबाधा भवति एव। किन्तु अनन्तरं शुभग्रहाः ताम् अनुग्रहीष्यन्ति। इदानीं तस्याः आरोग्ये या प्रगतिः दृष्टा सा तृप्तिकरी अस्ति। श्वः

भवन्तौ सर्वं प्रत्यक्षं द्रक्ष्यतः'' इति उक्तवान् वाचस्पतिमिश्रः। एतावत् उक्त्वा सः ततः निर्गतवान्।

राजकुमारी द्रष्टुं शक्या इति एकत्र आनन्दः। अपरत्र इतोऽपि काश्चन घण्टाः यापनीयाः खलु इति खेदः। एवं उभयविधभावेन राजा राज्ञी च कथमपि तत् दिनं यापितवन्तौ।

युवराज्ञीं द्रष्टुं राजा राज्ञी च गच्छतः इति वार्तां श्रुतवतां प्रजाजनानां महत् औत्सुक्यम्। ते मार्गम् उभयतः पङ्क्तिशः स्थितवन्तः। केचन राजकुमार्याः आरोग्यविषये राजसेवकान् विविधान् प्रश्नान् पृच्छन्ति स्म। 'राजकुमार्याः आरोग्ये दिने दिने प्रगतिः दृश्यते' इति राजा तादृशान् मन्दहासपूर्वकं वदति स्म।

सारससरोवरस्य तीरे एव स्थितः नाविकः राजानं राज्ञीं च विनयेन नमस्कृतवान्। राजा राज्ञी च नौकाम् आरुह्य उपविष्टवन्तौ। अङ्गरक्षकाः तीरे एव स्थितवन्तः। नौका द्वीपस्थं भवनं प्रति प्रस्थिता।

राज्ञः आगमनं ज्ञात्वा वृद्धा दासी कमला ससम्भ्रमम् आगत्य नमस्कृतवती। अनन्तरं राजानं राज्ञीं च विद्यावत्याः प्रकोष्ठं नीतवती सा। तदा एव निद्रातः जागरणं प्राप्तवती आसीत् विद्यावती। मातापितरौ दृष्ट्वा सा हसन्ती उत्थाय आगतवती। ''वत्से! कुशलिनी खलु भवती'' इति वदन्ती राज्ञी पुत्रीम् आलिङ्ग्य शिरसि आघ्रातवती।

पुत्र्याः दर्शनतः राजदम्पत्योः मुखं





विकसितम् अस्ति। किञ्चित्कालं तत्र वार्तालापं कृत्वा पुत्र्या सह तौ पार्श्वस्थम् उद्यानं गतवन्तौ। तत्र शिलासने उपविश्य पुनः ते वार्तालापं कृतवन्तः। 'आहारः रोचते खलु?' 'बुभुक्षा भवति खलु?' 'निद्रा प्राप्यते खलु?' 'कोऽपि क्लेशः तु नास्ति खलु?' इत्येवं बहुधा प्रश्नान् पृष्टवती राज्ञी। विद्यावत्याः मुखतः च तृप्तिकराणि एव उत्तराणि आगतानि। अनन्तरं विद्यावती मातापित्रोः कुशलवार्तां पृष्टवती। प्रासादस्थानां बहूनां विषये विविधप्रश्नान् पृष्टवती। एवं वार्तालापं कुर्वत्सु तेषु समयः महान् गतः। सूर्यास्तः च आसन्नः। अतः राजा राज्ञी च ततः प्रस्थितवन्तौ। कमला ताभ्यां सह नौकापर्यन्तम् आगतवती। राजदम्पती 'राजकुमार्याः योगक्षेमनिर्वहणे विशेषा आस्था भवतु' इति ताम् उक्त्वा ततः निर्गतवन्तौ। कमला भवनस्य अन्तः गतवती।

पुनः सप्ताहत्रयस्य अनन्तरं वाचस्पतिमिश्रः आगत्य राजकुमार्याः दर्शनार्थं योग्यं कालं सूचितवान्। तदनुगुणं राजदम्पती सारससरोवरस्थं द्वीपं गत्वा पुत्रीं दृष्टवन्तौ। एतत्सन्दर्भे तयोः स्वागतार्थं विद्यावती स्वयं सोपानानि अवतीर्य नौकापर्यन्तम् आगतवती आसीत्। इदानीं तस्याः स्वास्थ्ये प्रगतिः स्फुटतया दृश्यते स्म। अतः आरोग्यविषये प्रश्नान् अकृत्वा विनोदवार्तालापं कृतवन्तौ राजदम्पती। एवं सन्तोषेण तत्र समयं यापयित्वा सूर्यास्तसमये ततः प्रस्थितवन्तौ तौ।

एतदनन्तरं पुनः सप्ताहत्रयम् अतीतम्। एकविंशतितमे दिने प्रातः एव वाचस्पतिमिश्रेण राजप्रासादं प्रति आगन्तव्यम् आसीत्। ग्रहगतिं दृष्ट्वा योग्यं समयं सः सूचयति स्म। एतत्सन्दर्भे तु मध्याह्नः अतीतः चेदपि वाचस्पतिमिश्रस्य दर्शनं तु नास्ति। अतः राज्ञी राजा च किङ्कर्तव्यतामूढौ जातौ।

अनन्तरदिने प्रातः अपि वाचस्पतिमिश्रः राजप्रासादं प्रति न आगतः। तदा राज्ञी उद्वेगेन पतिम् उक्तवती– "आचार्यम् आनेतुं भटं कञ्चित् प्रेषयाम वा?" इति।

"देवि, मास्तु तथा। वाचस्पतिमिश्रवर्यः अस्माकम् आतङ्कं न जानाति इति न। ग्रहगतिं सम्यक् परिशील्य यथोचितं निर्णयं श्रावयति सः। अतः अत्र त्वरा न उचिता। यदि योग्यः कालः प्राप्तः स्यात् तर्हि सः एव स्वयम् अत्र आगच्छेत्। इदानीं योग्यः मुहूर्तः प्राप्तः न स्यात्। अतः सः न आगतवान् स्यात्। पुत्री कुशलिनी इति वार्ता तु प्रतिदिनं परिचारिकाद्वारा ज्ञायते एव। अतः दिनद्वयस्य विलम्बः जातः चेत् न कोऽपि हानिः। एतादृशे सन्दर्भे संयमः प्रदर्शनीयः अस्माभिः" इति राज्ञीम् उक्तवान् राजा।

तस्मिन् दिने सायं वाचस्पतिमिश्रः जगत्पत्याचार्येण सह राजप्रासादम् आगतवान्। तयोः आगमनं दृष्ट्वा राजा ससन्तोषम् उत्थाय आदरेण स्वागतवचनानि उक्त्वा उचिते आसने उपवेशितवान्।

अनन्तरं वाचस्पतिमिश्रः राजानम् अन्यप्रकोष्ठं नीत्वा सूचितवान्– "श्वः उषसि एव भवता पुत्रीं दृष्ट्वा प्रत्यागन्तव्यम्" इति।

'किमर्थम् एवं त्वरया गत्वा आगन्तव्यम्? किमर्थं तस्याः दर्शने दिनद्वयात्मकः विलम्बः?' इति प्रष्टव्यम् इति राजा उद्युक्तः। तावता तत्र आगतः जगत्पत्याचार्यः– "श्वः सूर्योदयतः पूर्वम् एव भवद्भ्यां राजकुमारीं दृष्ट्वा प्रत्यागन्तव्यम्। तदनन्तरं नव दिनानि यावत् योग्यः मुहूर्तः नास्ति। अनन्तरं मासत्रयं यावत् युवराज्ञी ग्रहपाशैः बद्धा भवेत्। तत्काले





चेत् पुत्र्याः सुखनिद्रायाः भङ्गः स्यात् खलु?'' इति उक्तवती राज्ञी।

''एतादृशचिन्तनार्थं न एषः समयः। मासत्रयं यावत् विद्यावती ग्रहपाशैः बद्धा भवति इति उभाभ्याम् अपि ज्योतिषिकाभ्याम् उक्तम् अस्ति। अविलम्बेन विद्यावतीं दृष्ट्वा आगन्तव्यम् इति तयोः आज्ञा अस्ति। अतः प्रथमं गत्वा आगच्छाव। अनन्तरम् आचार्येण सह समालोच्य यथोचितं करवाव'' इति उक्तवान् राजा।

''ग्रहपाशबन्धः किं घोरः भवति? के के गहाः तां पीडयिष्यन्ति? एतद्विषये ज्योतिषिकाभ्यां किमपि उक्तं वा?'' इति पुनः पृष्टवती राज्ञी।

''एतादृशवार्तालापार्थं न एष समयः। विद्यावतीं दृष्ट्वा प्रत्यागत्य भवती एव ज्योतिषिकौ विस्तरेण पृच्छतु'' इति उक्तवान् राजा।

अनन्तरदिने उषसि एव पूर्वसूचनां विना आगतौ राजदम्पती दृष्ट्वा नाविकः आश्चर्यचकितः। सः झटिति उत्थाय तौ नौकायाम् उपवेश्य द्वीपसमीपं नीतवान्। तत्र राजदम्पत्योः स्वागतार्थं वृद्धा परिचारिका कमला राजकुमारी विद्यावती वा न आगता आसीत्। 'पूर्वसूचनां विना आवाभ्याम् आगतम् इत्यतः तयोः अनुपस्थितिः जाता स्यात्' इति चिन्तयन्तौ राजा राज्ञी च अग्रे गतवन्तौ। भवनस्य अन्तः गतवन्तौ च।

प्राणहानिभीतिः तु नास्ति तथापि ....'' इति वचनम् अर्धे स्थगितवान्।

तावता राजा– ''ज्ञातं मया। ग्रहपाशस्य निवारणार्थं प्रयत्नं करिष्यन्ति खलु भवन्तः? तदर्थम् अद्यैव प्रयत्नस्य आरम्भः भवतु'' इति उक्तवान्। अनन्तरं तौ ज्योतिषिकौ ततः प्रस्थितवन्तौ। तौ प्रेषयित्वा त्वरया अन्तःपुरं गतवान् राजा।

''देवि! उभौ अपि ज्योतिषाचार्यौ स्वयम् आगत्य सूचितवन्तौ यत् श्वः उषसि एव गत्वा राजकुमारीं दृष्ट्वा सूर्योदयात् पूर्वं प्रत्यागन्तव्यम् इति'' इति राज्ञीम् उक्तवान् राजा।

''किमर्थं तावती त्वरा? तावच्छीघ्रं गतं

अश्रूणि स्रावयन्ती कोणे उपविष्टा वृद्धा दासी एतयोः आगमनतः झटिति उत्थाय रुदती एव पृष्टवती– "अत्र यत् प्रवृत्तम् तत् एतावता एव भवद्भ्यां ज्ञातं वा?" इति।

"किं प्रवृत्तम् अत्र? विद्यावती तु कुशलिनी खलु?" इति उद्वेगेन भीत्या च पृष्टवन्तौ राजा राज्ञी च।

"विद्यावत्याः विषये एव चिन्ता इदानीम्। सा .... सा भवने कुत्रापि न दृश्यते इदानीम्" इति भीतियुक्तेन स्वरेण उक्तवती वृद्धा कमला।

"भवने सर्वेषु कोणेषु अन्वेषणं कृतं वा?" इति पृष्टवान् राजा।

महाराज्ञ्याः मुखतः तु किमपि वचनं न निर्गतम्। नितरां दिग्भ्रान्ता अस्ति सा।

"प्रभो, मम जीवने एतादृशी घटना इतः पूर्वं न प्रवृत्ता। प्रायः रात्रौ अहं निद्राम् एव न प्राप्नोमि। किन्तु ह्यः रात्रौ गभीरनिद्रा मम। न जाने, किमर्थम् एवं जातम् इति। इतः किञ्चित्कालतः पूर्वम् उत्थाय अहं राजकुमार्याः शय्यां सकृत् दृष्टवती। तत्र राजकुमारी न आसीत्। निद्रितां माम् उत्थापयितुम् अनिच्छन्ती सा शौचगृहं गतवती स्यात् इति विचिन्त्य अहं तत्र गतवती। तत्रापि न आसीत् सा। उच्चैः आह्वयन्ती अहं भवने सर्वत्र ताम् अन्विष्टवती। कुत्रापि न दृष्टा सा" इति रुदती उक्तवती कमला।

"एवं तर्हि कुत्र गता सा?" इति वदन्ती राज्ञी शयनप्रकोष्ठे इतरत्र च अन्वेषणं कृतवती। राजा अपि अन्वेषणं कृतवान्।

"विद्यावति, वत्से! कुत्र विलीना भवती? आगच्छतु वत्से अत्र?" इति वदन्ती अश्रूणि स्रावितवती राज्ञी।

राजकुमारीम् आह्वयन्तौ राजा राज्ञी च उद्याने द्वीपे अन्यत्र च अटितवन्तौ। किन्तु युवराज्ञी कुत्रापि न दृष्टा।

राजा नाविकम् आहूय आज्ञापितवान्– "अविलम्बेन गत्वा सेनापतिम् अत्र आनयतु" इति।

–(अनुवर्तते)






# देवीविग्रहदर्शनम्

मध्यरात्रे श्मशानमार्गे सञ्चारम् अपि नित्यकर्मसु अन्यतमं भावयन् त्रिविक्रमः यथापूर्वं वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनं श्मशानमार्गम् अनुसृतवान्। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! मध्यरात्रे एतस्मिन् घोरे श्मशानमार्गे भवतः सञ्चारं दृष्ट्वा अहम् आश्चर्यम् अनुभवामि। 'भवान् कश्चन असाधारणः पुरुषः स्यात्' इति चिन्तयामि अपि। भवान् पण्डितः स्यात्, पामरः अपि स्यात्। अथवा तटस्थः कश्चन पुरुषः अपि स्यात्। व्यक्तिस्वरूपस्य व्यवहारस्य च सम्बन्धः कोऽपि न भवति। पण्डिताः अपि अज्ञाः इव व्यवहरन्ति। पामराः अपि कदाचित् प्राज्ञाः इव व्यवहरन्ति। व्यवहारे प्रमादः तु सर्वजनसाधारणः। अत्र उदाहरणरूपेण

## वेतालकथा



काञ्चित् कथां श्रावयामि। श्रद्धया शृणोतु तावत्। कथाश्रवणेन भवतः मार्गायासः अपि परिहृतः भवेत्'' इति।

अनन्तरं वेतालेन कथा आरब्धा–

पूर्वम् सुवर्णदीपिकानामके नगरे तारकेश्वरो नाम कश्चन महाधनिकः आसीत्। तस्य प्रभूता सम्पत्तिः तु आसीत्, किन्तु जीवने तृप्तिः न आसीत्। वाणिज्ये जायमाना प्रगतिः एव तस्य अशान्तेः कारणम् आसीत्।

एतस्य वाणिज्यप्रगतिं दृष्ट्वा असूयाम् अनुभवन्तः विविधोपायैः तं पीडयन्ति स्म। बान्धवाश्च विविधान् व्याजान् कथयन्तः तदा तदा धनार्थं तं पीडयन्ति स्म। अपात्रे दानं कर्तुं न इच्छति तारकेश्वरः। अतः बहूनाम् अप्रीतिः अपि सम्पादिता आसीत् तेन।

तस्य पत्नी अपि अनुकूला न। सर्वदा आभरणव्यामोहः तस्याः। प्रतिदिनं बहूनि आभरणानि धृत्वा इतस्ततः सञ्चरन्ती आढ्यतां प्रदर्शयन्ती तृप्तिम् अनुभवति सा। 'पत्युः सुखदुःखेषु मम कोऽपि सम्बन्धः नास्ति' इति चिन्तयति स्म सा।

पुत्रः तु विविधेषु दुर्व्यसनेषु आसक्तः। एतस्य हस्ते सदा धनं भवति इत्यतः तं परितः हितचिन्तकव्याजेन दुष्टमित्राणि एव सदा भवन्ति स्म। पुत्रं सन्मार्गे आनेतुं बहुधा प्रयत्नं कृत्वा अपि असफलः आसीत् तारकेश्वरः।

एवं सर्वत्र समस्यासु सत्सु मनःशान्तिः कुतः? प्रतिदिनं या काऽपि खेदकरी घटना प्रवर्तते एव। तदा तारकेश्वरस्य मनसः अशान्तिः वर्धते।

एवं स्थिते शिवानन्दः नाम योगी कदाचित् तारकेश्वरेण मिलितः। 'एषः मम समस्यां निवारयितुं समर्थः' इति मत्त्वा तारकेश्वरः स्वकीयचिन्तां विस्तरेण निवेद्य 'एतस्याः निवारणार्थं योग्यं मार्गम् उपदिशतु कृपया' इति प्रार्थितवान्।

योगी सर्वं श्रुत्वा उक्तवान्– ''इतः शतयोजनदूरे विन्ध्यपर्वतस्य समीपे देवनन्दनं नाम सरोवरम् अस्ति। तस्य तीरे कश्चन आलयः अस्ति। आलये

देवनन्दिनीनामिकायाः देव्याः विग्रहः अस्ति। स च विग्रहः भवता दृष्टः चेत् मनःशान्तिः निश्चयेन प्राप्यते। किन्तु तस्य विग्रहस्य वैशिष्ट्यं यत् सः ज्ञानिभिः केवलं दृश्यते। अज्ञानिनः तु विग्रहस्थले शून्याकाशं केवलं पश्यन्ति, न तु विग्रहम्'' इति।

तारकेश्वरः योगिनं कृतज्ञतावचनानि उक्त्वा शुभे मुहूर्ते देवनन्दिनीविग्रहस्य दर्शनार्थं गृहात् प्रस्थितवान्। कानिचन दिनानि यावत् प्रयाणं यदा कृतं तदा तीर्थङ्करः नाम अन्यः यात्रिकः तेन मिलितः। वार्तालापतः ज्ञातं यत् सः कश्चन महापण्डितः इति। सः विन्ध्यपर्वतम् उद्दिश्य एव प्रयाणं कुर्वन् अस्ति इत्यपि ज्ञातवान् तारकेश्वरः। एतत् ज्ञात्वा नितरां सन्तुष्टः अभवन् सः।

'पण्डितस्य साहचर्येण बहवः विषयाः ज्ञातुं शक्याः' इति आलोचितवान् तारकेश्वरः। अतः सः आध्यात्मिकान् भौतिकान् च विषयान् आधारीकृत्य बहून् प्रश्नान् पृष्टवान्। तीर्थङ्करः तेषाम् उचितानि उत्तराणि उक्तवान्। तेषां श्रवणतः तारकेश्वरस्य बहवः सन्देहाः निवृत्ताः। सः नितरां सन्तुष्टः अभवत्।

तौ मिलित्वा कानिचन दिनानि प्रयाणं कृतवन्तौ। प्रयाणकाले कदाचित् तीर्थङ्करः तारकेश्वरं पृष्टवान्– ''श्रीमन्! विन्ध्यपर्वतदिशि मम प्रयाणम् इति भवता



उक्तं खलु? पर्वतपरिसरे कं प्रदेशम् अभिलक्ष्य गच्छन् अस्ति भवान्?'' इति।

तदा तारकेश्वरः स्वस्य धनिकत्वं, ततः आगताः पीडाः, गृहसदस्य-बान्धवादीनां पीडां, स्वस्य मानसिकीम् अशान्तिं च विस्तरेण निवेद्य उक्तवान्– ''देवनन्दिनी-विग्रहस्य दर्शनं प्राप्तुं पर्वतम् अभिलक्ष्य प्रस्थितवान् अहम्। तस्य विग्रहस्य अपूर्वं सामर्थ्यम् इति केनचित् महात्मना बोधितम्'' इति।

''एवं वा? अहम् अपि देवनन्दिन्याः विग्रहं द्रष्टुम् एव प्रस्थितः। देव्याः विग्रहस्य दर्शनतः इष्टं सिद्ध्यति इति कश्चित् महात्मा माम् अपि बोधितवान्'' इति



सामर्थ्यम्। पुत्रेभ्यः उत्तमानि वस्त्राणि आनेतुं न शक्तिः। एवं प्रतिदिनं मम क्लेशाः एव। देवनन्दिनीविग्रहस्य दर्शनं प्राप्तं चेत् दारिद्र्यम् अपगच्छति इति श्रुतं मया। अतः मनसः शान्तिं प्राप्तुं प्रस्थितवान् अस्मि अहम्'' इति।

एतत् श्रुत्वा तारकेश्वरः– ''श्रीमन्! इतः परं देव्याः दर्शनेन मया किमपि प्राप्तव्यं नास्ति इति भाति। अतः अहं गृहं प्रति गच्छामि'' इति उक्त्वा तीर्थङ्करं नमस्कृत्य प्रतिगन्तुम् उद्युक्तः।

तदा तस्य गमनं स्थगयन् प्रार्थितवान् तीर्थङ्करः– ''आवाम् एतावद्दूरं सहैव आगतवन्तौ। इतः परम् अधिकं दूरं गन्तव्यं नास्ति। अतः आलयं गत्वा विग्रहदर्शनं प्राप्य एव प्रतिगच्छाव। एतावद्दूरम् आगत्य देवीविग्रहस्य दर्शनम् अप्राप्य प्रतिगमनं न शोभते'' इति।

तीर्थङ्करस्य सानुरोधं कथनम् अङ्गीकुर्वन् तारकेश्वरः प्रतिगमनं परित्यज्य तीर्थङ्करेण सह प्रस्थितवान्। ततः चतुर्णां दिनानाम् अनन्तरं तौ देवीमन्दिरस्य पार्श्वे स्थितस्य सरोवरस्य तीरं प्राप्तवन्तौ।

देव्याः आलयः जीर्णप्रायः आसीत्। आलयस्य पुरतः एकं शिलाफलकम् आसीत्। शिलाफलके लिखितम् आसीत् यत् ज्ञानी केवलं विग्रहं द्रष्टुं शक्नोति, नान्यः इति।

शिलालेखं पठित्वा तीर्थङ्करः सरोवरे

उक्तवान् तीर्थङ्करः।

तदा तारकेश्वरः आश्चर्येण– ''श्रीमन्! पण्डितस्य भवतः कः मनःक्लेशः, येन भवान् देवीविग्रहं द्रष्टुं गच्छेत्? अहं तु वाणिज्यनिरतः अज्ञः। मम मनःक्लेशाः सहजाः। भवतः तथा न स्यात् खलु?'' इति उक्तवान्।

तदा तीर्थङ्करः खेदमिश्रितेन स्वरेण उक्तवान्– ''मम पिता महापण्डितः आसीत्। ततः मया सकलानि शास्त्राणि अधीतानि। किन्तु किं प्रयोजनम् एतेन? जीवने तृप्तिः एव नास्ति मम। गृहे महत् दारिद्र्यम्। वासार्थं न उत्तमं गृहम्। पत्न्या अपेक्षितानि आभरणानि कारयितुं न

स्नानं कर्तुं गच्छन् तारकेश्वरम् उक्तवान्– "भवान् अपि सरोवरे स्नानं करोतु तावत्" इति।

"प्रथमं भवान् स्नानं करोतु। ततः अहं करिष्यामि" इति उक्तवान् तारकेश्वरः।

तीर्थङ्करः स्नानं समाप्य आलयं प्रविष्टवान्। तेन तत्र कोऽपि विग्रहः न दृष्टः। गर्भगृहं रिक्तम् आसीत्। विग्रहः मृत्तिकायां लीनः स्यात्, चोरैः अपहृतः वा स्यात् इति चिन्तयित्वा आलयतः बहिः आगतवान् तीर्थङ्करः।

तावता स्नानं समाप्य मालां गृहीत्वा आलयं प्रवेष्टुम् उद्युक्तः तारकेश्वरः तीर्थङ्करेण दृष्टः। तं दृष्ट्वा उक्तवान् तीर्थङ्करः– "भोः, माला अपि सज्जीकृता वा भवता? व्यर्थः परिश्रमः भवतः। आलये विग्रहः एव नास्ति" इति।

तदा तारकेश्वरः– "भवादृशः ज्ञानशून्यः विग्रहं द्रष्टुं न शक्नोति इति अहं पूर्वम् एव जानामि स्म" इति उक्त्वा भक्त्या अन्तः गत्वा प्रदक्षिणनमस्कारान् कृतवान्।

एतत् दृष्ट्वा तीर्थङ्करः कोपेन– "अये धूर्त! मां ज्ञानशून्यम् उक्त्वा आत्मानं महाज्ञानिनं भावयन् डम्भाचारं प्रदर्शयति वा भवान्? भवतः विग्रहदर्शनं मिथ्या एव" इति उक्तवान्।

तारकेश्वरः उत्तरं किमपि अवदन् तीर्थङ्करं सकृत् मन्दहासपूर्वकं दृष्ट्वा हस्ते



स्थितां मालां विग्रहस्य कण्ठे अर्पितवान्। तीर्थङ्करेण यद्यपि विग्रहः न दृष्टः, किन्तु विग्रहस्य कण्ठे स्थापिता माला आकाशे स्थिता इव दृष्टा। विग्रहस्य अभावे मालायाः स्थितिः अशक्या खलु? अतः तारकेश्वरेण दृष्टः विग्रहः मया न दृष्टः इति निर्णीतवान् तीर्थङ्करः। तस्य मुखं म्लानं जातम्। पश्चात्तापकारणतः नेत्राभ्याम् अश्रूणि आगतानि। तारकेश्वरः वचनं किमपि अवदन् तं स्वनगरं नीतवान्। गृहं नीत्वा– "भवतः अपूर्वं पाण्डित्यं दृष्ट्वा सन्तुष्टः अहम् एतत् उपायनरूपेण अर्पयन् अस्मि। कृपया स्वीकरणीयम् एतत्" इति उक्त्वा प्रभूतं धनं वज्रवैडूर्यादिकं च अर्पितवान्।

वेतालः एवं कथां समाप्य अवदत्– "राजन्! मनःशान्तेः प्राप्त्यर्थं देवीं द्रष्टुं निर्गतः तारकेश्वरः मध्येमार्गं किमर्थं प्रतिगन्तुम् उद्युक्तः आसीत्? तारकेश्वरेण पृष्टानां प्रश्नानां योग्यानि उत्तराणि दत्तवान् आसीत् तीर्थङ्करः। तेषां प्राप्त्या तृप्तः आसीत् तारकेश्वरः। एवं स्थिते अपि तीर्थङ्करं किमर्थं ज्ञानशून्यम् उक्तवान् एषः? एषः किम् अहङ्कारी जातः आसीत्? यः विग्रहः ज्ञानिभिः केवलं द्रष्टुं शक्यः स च विग्रहः पामरेण तारकेश्वरेण कथं दृष्टः? मम एतेषां प्रश्नानाम् उत्तराणि जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "अपारा सम्पत्तिः एव मनसः अशान्तेः हेतुः इति चिन्तयित्वा शान्तिप्राप्त्यर्थं गृहात् निर्गतवान् तारकेश्वरः। मार्गे तीर्थङ्करः मिलितः। महापण्डितः सः सम्पत्तेः प्राप्त्यर्थम् एव देवीं द्रष्टुं गच्छन् अस्ति इति यदा ज्ञातं तदा तारकेश्वरे विवेकः उदितः। मया एतावत्पर्यन्तं धनसङ्ग्रहमात्रं चिन्तितम् आसीत्। विद्यमानां सम्पत्तिम् अन्येभ्यः दत्त्वा निर्व्यामोहत्वं प्राप्तं चेत् मनःशान्तिः प्राप्यते इति तेन अवगतम्। अतः सः मध्येमार्गं प्रतिगन्तुम् उद्युक्तः आसीत्। पण्डितः अपि तीर्थङ्करः धनतृष्णया युक्तः अस्ति इति ज्ञात्वा तं ज्ञानशून्यम् उक्तवान् तारकेश्वरः। तारकेश्वरस्य शास्त्रपाण्डित्यं न आसीत् चेदपि सारासारविवेकः तु प्राप्तः आसीत् तेन। अतः ज्ञानिना द्रष्टुं शक्यः देवीविग्रहः तेन दृष्टः। धनमोहवता तीर्थङ्करेण न दृष्टः। तारकेश्वरः यथा विवेकी तथा उदारः अपि। अतः सः करुणया तीर्थङ्कराय अपारां सम्पत्तिम् उपायनरूपेण अर्पितवान्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# असत्यकथनस्पर्धा

वरदपुरराज्यं गरुडसेनः नाम राजा पालयन् आसीत्। कदाचित् तस्य मनसि विचारः उत्पन्नः यत् अहम् अपि विश्वासं यथा कुर्यां तथा असत्यं यः कथयति तस्मै पारितोषिकं दातव्यम् इति। अतः सः आस्थानविदूषकम् आहूय स्वकीयं विचारं निवेदितवान्।

विदूषकः क्षणकालं विचिन्त्य उक्तवान्– "प्रभो, अहं चिन्तयामि– आगामिमासे असत्यकथनस्पर्धा आयोजिता चेदेव वरं भवेत् इति। देशस्य चतुर्भ्यः कोणेभ्यः अपि असत्यकथनोत्सुकाः अत्र आगच्छेयुः" इति।

"योग्या सूचना भवतः। एतस्याः स्पर्धायाः व्यवस्थां भवान् एव करोतु" इति आदिष्टवान् राजा गरुडसेनः।

"प्रभो, एतस्याः स्पर्धायाः निमित्तं प्रासादप्राङ्गणम् अपर्याप्तं भवेत्। अतः उद्यानस्य पार्श्वे स्थिते क्रीडाङ्गणे स्पर्धा व्यवस्थापनीया। अन्यप्रदेशेभ्यः आगन्तॄणां वसतिव्यवस्था अपि तत्रैव कल्पनीया। तदा सर्वं सुष्ठु स्यात्। व्यवस्थायाः व्ययार्थं द्विसहस्रं रूप्यकाणि इदानीं दत्तानि चेत् वरं भवेत्" इति उक्तवान् विदूषकः।

राजा एतत् अङ्गीकुर्वन् कोषाधिकारिणम् आहूय आज्ञापितवान् यत् विदूषकाय द्विसहस्रं रूप्यकाणि दातव्यानि इति।

रूप्यकाणि प्राप्य उक्तवान् विदूषकः– "प्रभो, श्वः एव असत्यकथनस्पर्धावार्तां सडिण्डिमघोषं देशे सर्वत्र प्रसारयिष्यामि। क्रीडाङ्गणे स्पर्धायाः निमित्तं व्यवस्थायाः आरम्भं करिष्यामि" इति।

असत्यकथनस्पर्धादिनम् आगतम्। पूर्वनिश्चयस्य अनुगुणं राजा गरुडसेनः प्रातः अष्टवादने क्रीडाङ्गणं गतवान्।

क्रीडाङ्गणे स्पर्धायाः निमित्तं कोऽपि

सन्नाहः कृतः न दृष्टः। स्पर्धार्थं तत्र कोऽपि न आगतः आसीत्। राज्ञः उपवेशनार्थम् आसनम् अपि न कल्पितम् आसीत्।

राजा गरुडसेनः तत्रत्यं रक्षकभटम् आहूय पृष्टवान्– "अद्य अत्र असत्यकथनस्पर्धा प्रचलिष्यति खलु? कार्यक्रमार्थम् अत्र कोऽपि सन्नाहः कृतः न दृश्यते। किमर्थम्?" इति।

तदा रक्षकभटः भीत्या कम्पमानः– "प्रभो, क्षन्तव्यः अहम्। का स्पर्धा, का व्यवस्था इति अहं किमपि न जानामि। स्पर्धायाः विषयं मां कोऽपि किमपि न उक्तवान्" इति यावत् वदन् आसीत् तावता विदूषकः तत्र आगतवान्।

राजा गरुडसेनः विदूषकं कोपेन पश्यन्– "किं भोः इदम्? अद्य असत्यकथनस्पर्धा अस्ति इति एतं क्रीडाङ्गणरक्षकं न उक्तवान् वा? देशे वार्ता न प्रसारिता वा? कोऽपि अत्र न दृश्यते खलु? 'अष्टवादने स्पर्धायाः आरम्भः' इति माम् उक्तवान् आसीत् भवान्। किन्तु उपवेशनार्थम् आसनम् अपि न दृश्यते खलु?" इति पृष्टवान्।

तदा विदूषकः किमपि अजानन् इव– "प्रभो, भवान् किं वदन् अस्ति इति न जानामि अहम्। काऽपि स्पर्धा, काऽपि व्यवस्था इति वदन् अस्ति भवान्। का स्पर्धा? का व्यवस्था? केन करणीया आसीत्? भवतः आज्ञां कदाचिद् वा धिक्कुर्यां वा अहम्? का वस्तुस्थितिः इत्येव न ज्ञायते मया" इति गाम्भीर्येण उक्तवान्।

एतावता विदूषकस्य तन्त्रं ज्ञातं महाराजेन। सः उच्चैः हसन्– "साधु विदूषकः साधु! असत्यकथने स्वसामर्थ्यं सम्यक् निरूपितं भवता। स्पर्धाप्रस्तावः भवता यदा कृतः तदा मया चिन्तितम् आसीत्– भवान् स्पर्धाम् आयोजयिष्यति इति। इदानीं सर्वं ज्ञातुम्। मत्तः द्विसहस्रं रूप्यकाणि स्वीकृतवान् खलु भवान्। तत् भवतः समीपे एव भवतु। तावदेव धनं पुनः ददामि भवते" इति उक्तवान्। विदूषकाय योग्यं पारितोषिकं दत्तवान् च।






अस्मद्देशीया पशुपक्षिसम्पत्—

# को कि लः

मृदुमधुरस्वरवान् कोकिलः पक्षिषु श्रेष्ठः। तादृशं भारतीयं साहित्यं प्रायः न स्यात्, यत्र कोकिलस्य प्रशंसा कृता न स्यात्। श्रेष्ठाः कवयः गायकाः च 'कविकोकिलः' 'गानकोकिलः' इत्यादिभिः बिरुदैः सत्क्रियन्ते अस्मद्देशे। वसन्तकालः यदा प्राप्यते तदा आम्रवृक्षाणां मध्यतः कोकिलगानं श्रूयते। किन्तु यदा हेमन्तकालः आगच्छति तदा कोकिलस्य मुखं पिहितं भवति। उष्णं प्रदेशम् अन्विष्यन् निर्गच्छति कोकिलः।

पुंस्कोकिलः कृष्णवर्णीयः भवति। तस्य चञ्चूः हरितवर्णमिश्रितः भवति। नेत्रं परितः रक्तरेखा दृश्यते। कोकिला पुंस्कोकिलवत् कृष्णा न। तस्याः शरीरे श्वेतरेखाः कालकाः च तत्र तत्र दृश्यन्ते। कोकिलः नीडरचनं सर्वथा न इच्छति। अतः कोकिला काकनीडे अण्डानि प्रसूते। कोकिलाण्डानि काकाण्डानि इव एव धूम्रवर्णेन भवन्ति। अतः काकाः अण्डेभ्यः शावकान् उत्पाद्य आहारादिभिः वर्धयन्ति। अतः कोकिलस्य 'परपुष्टः' इति नाम।

महावृक्षेषु पर्णानां मध्ये निवसति कोकिलः। फलानि कीटाः च कोकिलस्य आहारः।

# प्रवर्धमानः बालकविः

पुस्तकप्रियाः पुस्तकेषु तत्कृतिकारस्य हस्ताङ्कनं (आटोग्राफ्) प्राप्तुम् अहमहमिकया अग्रे आगच्छन्ति इति तु पाश्चात्यदेशेषु सामान्यः विषयः। यतः तत्र कृतिकारः तथा जनप्रियः भवति। किन्तु भारते एतादृशी घटना विरला। तथापि एकादशवर्षीयस्य प्रवर्धमानकवेः आदित्यदामोदरस्य विषये एवम् एव प्रवृत्तम्।

नवदेहल्यां गते फेब्रवरीमासे विश्वपुस्तकप्रदर्शनं प्रवृत्तम्। तत्र कयाचित् सुप्रसिद्धसंस्थया आयोजिते आपणे उपविश्य हसन् आदित्यः स्वकवितासङ्कलनात्मके पुस्तके हस्ताङ्कनं कृत्वा यच्छन् सर्वान् आश्चर्यचकितान् कृतवान्। इतः पूर्वं तेन रचितस्य 'वैव्रेषन्'(तरङ्गाः) नामकस्य कविता-सङ्ग्रहस्य विमर्शः प्रकाशितः आसीत्। तं विमर्शं पठित्वा सन्तुष्टाः पुस्तकप्रियाः 'बालकविम्' एतं द्रष्टुम्, एतस्य हस्ताङ्कनं प्राप्तुं च अनुपङ्क्तौ स्थितवन्तः। एवं स्थितेषु पुस्तकप्रियेषु कवितासक्ताः बालकाः एव अधिकाः आसन्।



आदित्यः अष्टमे वयसि प्रथमं पद्यं लिखितवान्। सः सदा पद्यानि पठति। तदीयः पिता देशस्य ईशान्यभागे— तन्नाम अस्साम्, बङ्गाल इत्यादिषु प्रदेशेषु— उन्नतोद्योगे आसीत्। तत्र अन्धकारप्रसारः शीघ्रम् एव भवति। अतः आदित्यः अन्धकारप्रसारानन्तरं पितुः प्रकोष्ठं प्रविश्य पुस्तकानि पठति स्म। एवं पठनसमये पद्यानि तस्य प्रियानि अभवन्। केषाञ्चित् पद्यानाम् अर्थः यद्यपि तेन न अवगतः तत्काले, तथापि सः तेषां लयं बन्धसौष्ठवं च दृष्ट्वा सन्तोषं प्राप्नोति स्म। मातरं पितरं वा पृष्ट्वा सः अर्थम् अवगन्तुं प्रयत्नं करोति स्म।

तासु कवितासु यत् प्राकृतिकं वर्णनं दृश्यते स्म, या कल्पनाशीलता दृष्टिगोचरा भवति स्म तत् आदित्यस्य अन्तरङ्गं प्रविश्य कवितानिर्माणार्थं मनः अनुकूलयति स्म।

गच्छता कालेन प्राकृतिकसौन्दर्येण प्रशान्तपरिसरेण च युक्तं प्रदेशं विहाय आदित्यः कलकत्ता - देहलीप्रभृतीनि महानगराणि अपि दृष्टवान्। तेषु नगरेषु स्थितं वायुकालुष्यं, परिसर-मालिन्यं, दारिद्र्यं च तं नितराम् अपीडयन्। सः स्वभावनाः बहिः प्रकटयितुम् उद्युक्तः अभवत्। ताः भावनाः एव कवितारूपं प्राप्नुवन्।

आदित्यः अन्ये बालकाः इव शालातः गृहं गत्वा प्रथमं गृहपाठं समापयति। अनन्तरं क्रीडार्थं निर्गच्छति सः। पादकन्दुक (फुट्बाल्) क्रीडा तस्य परमप्रिया। चतुरङ्गक्रीडायाम् अपि महती आसक्तिः अस्ति तस्य। क्रीडां समाप्य भोजनादिकम् अपि समाप्य रात्रौ स्वगणकयन्त्रस्य (पर्सनल् कम्प्यूटर्) पुरतः उपविश्य कविताः रचयति सः।

'अहं गणकयन्त्रविज्ञानी भविष्यामि' इति निश्चितवान् अस्ति आदित्यः। तच्च पदं १५ वर्षाणाम् अनन्तरं प्राप्येत तेन। किन्तु ततः पूर्वम् एतदीयाः अन्ये केचन 'कवितासङ्ग्रहाः' प्रकाशिताः भवेयुः एव।

# भवन्तः जानन्ति वा?

१. सुवर्णवज्ररत्नादीनां मानं केन मानेन क्रियते?
२. अधिकतया प्रकाशमानं नक्षत्रं किम्?
३. प्रपञ्चे ऐदम्प्राथम्येन पेपर्ब्याक् पुस्तकं केन प्रकाशितम्?
४. एतस्मिन् वर्षे सत्यजितरायवर्येण 'आस्कर्प्रशस्ति' प्राप्ता खलु? एतस्याः प्रशस्तेः तादृशं नाम कथम् आगतम्?
५. पञ्चविंशाततमं वर्षम् आंग्लेयैः 'सिल्वर् जुबिली ईयर्' (रजतोत्सववर्षम्) इति आचर्यते। एवम् एव कतमं वर्षं 'पेपर् अनिवर्सरी ईयर्' इति आचर्यते?
६. शाकसंवत्सरानुगुणं वर्षस्य प्रथमः मासः कः?
७. १९२१ तमवर्षात् पूर्वं टेबल्टेनिस्क्रीडायाः नाम अन्यत् आसीत्। तच्च नाम किम्?
८. सः पारसीकः धर्मगुरुः कः, यश्च जन्मसमनन्तरम् एव हसितवान् इति श्रूयते?
९. रक्ते चतुर्विधभेदाः सन्ति। ए, बि, ओ इति त्रयाणां गणानां नाम। चतुर्थगणस्य नाम किम्?
१०. युगपत् एव त्रयाणां देशानाम् अध्यक्षपदवीम् अलङ्कृतवान् कः? तच्च कदा?
११. चित्रोष्ट्रस्य विशिष्टं लक्षणं किम्?
१२. शनिग्रहस्य कति चन्द्राः सन्ति?
१३. अन्तरिक्षे स्थित्वा दृष्टं चेत् आकाशः केन वर्णेन युक्तः दृश्यते?
१४. आग्रानगरं केन कदा स्थापितम्?
१५. किञ्चुलकस्य कर्णः नेत्रं वा अस्ति वा?

## उत्तराणि

१. क्यारेट्मानेन।
२. ज्येष्ठानक्षत्रम्।
३. यानुटम् फिलिप् रिक्लेम्वर्येण, १८६७ तमे वर्षे।
४. १९२९ तमे वर्षे अमेरिकादेशे एषा प्रशस्तिः यदा घोषिता तदा मानवाकारिकाः काश्चन मूर्तयः निर्मिताः। तदा 'अमेरिकन् आकादमी आफ् मोशन् पिक्चर्स्'नामिकायाः संस्थायाः कश्चन अधिकारी उक्तवान् यत् एताः मूर्तयः मम मातुलम् आस्कर्वर्यम् आकारेण अनुकुर्वन्ति इति। तदारभ्य एतस्याः प्रशस्तेः नाम 'आस्कर्' इति जातम्।
५. प्रथमं वर्षम्।
६. चैत्रः।
७. पिंग्-पाग् इति।
८. जोरास्टर्।
९. 'एबि' इति।
१०. सैमन् बोलीवियर्। सः १९२८ तमे वर्षे बोलीविया, पेरु, कोलम्बिया इत्येतेषां देशानाम् अध्यक्षः आसीत्।
११. कयोश्चित् अपि द्वयोः चित्रोष्ट्रयोः समानाः वर्णपट्टिकाः न भवन्ति।
१२. दश।
१३. कृष्णवर्णोपेतः।
१४. सिकन्दर् लोदी, १५०६ तमे वर्षे।
१५. न।

# र स वा र्ताः

## अत्युन्नते स्थले सेतुः

वाहनसञ्चारार्थं निर्मितेषु सेतुषु अत्युन्नतः कः इत्यस्य उत्तरम् अस्ति– जम्मूकाश्मीरराज्यस्य लडकप्रदेशस्थः बरडंग् ला सेतुः इति। एतस्य सेतोः औन्नत्यं समुद्रस्तरात् १८५०३ द्वादशाङ्गुलानि। एतस्य निर्माणं भारतीयसीमापरिवहणसंस्थया (हिमांक प्राजेक्ट् आफ् बीकन्स्नामिकया) कृतम्। निर्माणस्य नेता मुख्यतन्त्रज्ञः बिग् बोम्बाट् केरा। एतस्य नाम गिन्निस्पुस्तके योजितम् अस्ति।





## वृक्षरक्षणार्थं पञ्चलक्षं रूप्यकाणि

मेक्सिकोदेशस्य ओक्साकाप्रदेशे अह्यूह्यूटेनामकः कश्चन तमालजातीयः वृक्षः अस्ति। एतं वृक्षं द्रष्टुं लक्षशः जनाः प्रतिवर्षम् आगच्छन्ति। एतस्य वैशिष्ट्यं यत् एषः २००० वर्षेभ्यः पूर्वम् जातः इति श्रूयते। तत्रत्यः सर्वकारः एतस्य वृक्षस्य रक्षणार्थं ५,००,००० डालर्स् व्ययीकर्तुं निर्णीतवान् अस्ति।

## दृष्टिदोषनिवारणार्थम्

येषां बालनां दृष्टिशक्तिः दुर्बला ते हरितवर्णकाचकयुक्तम् उपनेत्रं धरन्ति चेत् तेषां दृष्टिशक्तिः समीचीना भविष्यति इति एतेषु दिनेषु ज्ञातम् अस्ति। आक्सफर्ड्विश्वविद्यालयस्य नाडीमण्डलवैद्यविभागीयः डा. जानुस्टीन् सामान्यम् उपनेत्रं धृतवतः २० विद्यार्थिनः आधारीकृत्य प्रयोगं कृतवान्। तस्य परिणामतः ज्ञातं यत् यैः हरितवर्णमयम् उपनेत्रं ध्रियते तेषां दृष्टिः अचिरात् एव सम्यक् भविष्यति इति।





# ज्योतिश्शास्त्रम्

कस्मिंश्चित् ग्रामे रामशास्त्री नाम कश्चन विद्वान् आसीत्। तस्य पिता अपि विद्वान् आसीत्। सः स्वपुत्रम् अपि विद्वांसं कृतवान् आसीत्। रामशास्त्री ज्योतिश्शास्त्रे यथा निपुणः तथैव काव्यनिर्माणे अपि निपुणः आसीत्।

रामशास्त्री कदाचित् केषाञ्चित् जन्मकुण्डलीं दृष्ट्वा ग्रहगतिफलम् उक्तवान् आसीत्। तेन यद्यत् उक्तं तत्सर्वं सत्यं जातम् आसीत्। अतः ग्रामीणाः केचन रामशास्त्रिणः विषये आदरवन्तः जाताः, तस्य प्रशंसां कृतवन्तः अपि। एतत्सर्वं दृष्ट्वा रामशास्त्री निश्चितवान् यत् जन्मकुण्डलीफलकथनेन एव जीवननिर्वहणं करिष्यामि इति।

पुत्रस्य आशयं ज्ञात्वा पिता तं बोधितवान्– "वत्स! जन्मकुण्डलीफलं यदा उच्यते तदा बहुधा ऊहा अवलम्बनीया भवति। ग्रहगतिं सम्यक् ज्ञात्वा एवम् एव भवति इति वक्तुं प्रायः ब्रह्मणा अपि न शक्यते। अतः ज्योतिश्शास्त्रम् एव अवलम्ब्य जीवनं करिष्यामि इति निश्चयः मास्तु। अन्यशास्त्रेषु अपि भवतः पाण्डित्यम् अस्ति। काव्यरचनायाम् अपि समर्थः भवान्। अतः योग्यम् आश्रयं प्राप्य शास्त्रपाण्डित्येन कवित्वेन वा जीवतु। जातकफलकथनं मास्तु इति मम आशयः न। उपवृत्तिरूपेण तदपि भवतु। सन्तोषेण यैः यावत् दीयते तावत् स्वीकरोतु। किन्तु तदेव जीवनाधारः मा भवतु" इति।

किन्तु रामशास्त्रिणे पितुः उपदेशः न अरोचत। जीवनार्थं ज्योतिश्शास्त्रम् एव अवलम्बनीयम् इति तस्य इच्छा।

कदाचित् वीरभद्रः बाहुबलिः चेति उभौ जातकफलं ज्ञातुं रामशास्त्रिणः गृहम्

आगतवन्तौ। बाहुबलिः रामपुरात् आगतः धनिकः। वीरभद्रः कृष्णपुरात् आगतः शीघ्रकोपी। 'कोपसमये कञ्चित् मारयेत् अपि सः' इति जनाः तद्विषये वदन्ति स्म।

गृहं प्रति तयोः आगमनं दूरात् एव दृष्ट्वा रामशास्त्रिणः पिता पुत्रम् अन्तः आहूय उक्तवान्– "वत्स! गृहं प्रति आगच्छन्तौ एतौ कीदृशौ इति अहं जानामि। एतयोः जातकं दृष्ट्वा यदि भवान् फलं वदेत् तर्हि कदाचित् भवतः प्राणापायः अपि सम्भवेत्। अतः उपायेन एतौ प्रेषयतु। जातकफलं किमपि मा वदतु" इति।

किन्तु रामशास्त्रिणः तु महान् विश्वासः यत् मम ज्योतिश्शास्त्रे अपूर्वं पाण्डित्यम् अस्ति इति। अतः सः गृहम् आगतयोः बाहुबलि-वीरभद्रयोः जातकं दृष्ट्वा उक्तवान्– "भवतोः गृहस्य पृष्ठतः यः वल्मीकः अस्ति तस्य अधः खननं कृतं चेत् भवतोः हितं भविष्यति" इति। एतत् श्रुत्वा तौ ततः निर्गतवन्तौ।

ततः सप्ताहस्य अनन्तरं रामशास्त्रिणः पिता कस्यचित् कार्यस्य निमित्तं नगरं गतवान्। नगरतः प्रत्यागत्य सः पुत्रम् आहूय उक्तवान्– "अद्य नगरे वीरभद्रः बाहुबलिः च मिलितवन्तौ। तयोः अन्यतरः उक्तवान् यत् गृहस्य पृष्ठतः स्थितस्य वल्मीकस्य स्थले खननतः दशलक्षरूप्यकमूल्यकः निधिः प्राप्तः, अतः रामशास्त्रिणे दशसहस्रं रूप्यकाणि उपायनरूपेण दीयन्ते इति। अपरः उक्तवान् यत् गृहस्य पृष्ठतः स्थितस्य



वल्मीकस्थलस्य खननतः सर्पाः आगत्य गृहसदस्यान् दष्टवन्तः, ततः सर्वे मृताः, सजीवं स्थितः अहं रामशास्त्रिणः शिरच्छेदं कृत्वा प्रतीकारं साधयिष्यामि इति। मया यः अपायः तर्कितः आसीत् सः उपस्थितः एव इदानीम्। अतः अत्र वासः न क्षेमाय। अचिरात् एव इतः निर्गत्य ग्रामान्तरे वासः क्षेमाय'' इति।

रामशास्त्री स्वग्रामस्य त्यागम् अङ्गीकृतवान्। किन्तु ग्रामत्यागतः पूर्वं यत्र जातकफलं फलितं ततः उपायनरूपेण प्राप्यमाणं धनं स्वीकृत्य एव गन्तव्यम् इति निश्चित्य सः पितरं स्वविचारम् उक्तवान्।

''अस्तु तर्हि। तथैव करोतु'' इति उक्तवान् पिता।

''मम कथनतः धनं प्राप्तवान् कः इति वदतु तावत्'' इति उक्तवान् रामशास्त्री।

पिता क्षणकालम् आलोच्य– ''उभौ अपि नगरे मिलितौ। शुभफलं केन प्राप्तम्, अशुभफलं केन प्राप्तम् इति न स्मरामि खलु अहम्। सन्तोषः भयं च सम्मिलितम्। अतः विभ्रमः जातः। इदानीं कुत्र गतं चेत् सम्मानः, कुत्र गतं चेत् हानिः इति वक्तुं न शक्नोमि एव। भवान् ज्योतिश्शास्त्रनिपुणः किल? अतः तद्बलेन भवान् एव जानातु– कुत्र गतं चेत् लाभः इति'' इति उक्तवान् पिता।

रामशास्त्री प्रकोष्ठे उपविश्य गणनां कृतवान्। महता प्रयत्नेन अपि सः न ज्ञातवान् यत् कः अशुभफलं प्राप्तवान् इति। अतः सः खेदेन पितरम् उक्तवान्– ''तात! यद्यपि मम



महत् पाण्डित्यं, तथापि अशुभं फलं कः प्राप्तवान् इति अहं ज्ञातुं न शक्तवान्। या मां कष्टे पातयति तया विद्यया किम्? इतःपरं जातकफलं कदापि न कथयिष्यामि। नमो ज्योतिश्शास्त्राय" इति।

पुत्रस्य वचनं श्रुत्वा पिता हसन् उक्तवान्– "वत्स! जातकफलकथनेन लाभः यथा तथा हानिः अपि भवितुम् अर्हति। ये ये भवत्समीपम् आगच्छन्ति तेषां जातकस्य फलं वदति भवान्। कं किम् उक्तवान् इति न स्मरति भवान्। किन्तु ये भवन्मुखतः जातकफलं श्रुतवन्तः ते तु भवन्तं सम्यक् स्मरन्ति एव। ये शुभफलं प्राप्तवन्तः ते भवतः प्रशंसां कुर्युः। किन्तु ये अशुभफलं प्राप्तवन्तः ते निश्चयेन कुपिताः सन्तः भवन्तं पीडयिष्यन्ति। ऊहाबलेन अपि फलं कथनीयं भवति इत्यतः यद्यत् उक्तं तथैव सर्वदा भवति एव इति न नियमः। यदा अन्ये प्रशंसां कृतवन्तः तदा ज्योतिश्शास्त्रे भवतः विश्वासः आसीत्। किन्तु यदा अपायः उपस्थितः तदा भवान् तदेव शास्त्रं धिक्कुर्वन् अस्ति। वस्तुतः तु मया वीरभद्रः बाहुबलिः च नगरे न दृष्टौ एव। किन्तु ज्योतिश्शास्त्र-निपुणेन अपि भवता एतत् न ज्ञातम्। अथवा भवान् एतम् अंशं न चिन्तितवान्। एतादृश्यः एव घटनाः अन्याः अपि जीवने सम्भवेयुः। अतः एव वदामि– ज्योतिश्शास्त्रमात्रस्य अवलम्बनं मास्तु इति। भवतः अन्यशास्त्रपाण्डित्यं कवित्वं च अस्ति एव। राजाश्रयप्राप्तौ अपि न क्लेशः। अतः जीवननिर्वहणार्थम् अन्यस्य मार्गस्य अवलम्बनं भवतु। उपवृत्तिरूपेण जातकफलकथनम् अपि अनुवर्तताम्" इति।

एतया घटनया रामशास्त्रिणा विवेकः प्राप्तः। पितुः वचनस्य अनुगुणं सः राजाश्रयं प्राप्य अल्पे एव काले कीर्तिम् अपि प्राप्तवान्। जातकफलकथनम् अपि तस्य आसीत् एव। एवं कविः इति, पण्डितः इति, ज्योतिश्शास्त्रनिपुणः इति च कीर्तिं प्राप्य सुखेन जीवितवान् रामशास्त्री।






# ज्ञानार्जनोपायः

'शान्तिभूषणः नाम कश्चन महापण्डितः पूर्वम् उज्जयिन्याम् आसीत्। ये यत् पृच्छन्ति तस्य योग्यं समाधानं वदति स्म सः। अतः जनाः वदन्ति स्म यत् शान्तिभूषणवर्येण अपठितं शास्त्रं नास्ति, अज्ञातः विषयः अपि नास्ति इति।

शान्तिभूषणस्य शिष्येषु अन्यतमौ शाण्डिल्यः च्यवनः चेति। तयोः सदा जिज्ञासा— अस्माकं गुरुः एतावत् ज्ञानं कथं सम्पादितवान् स्यात् इति। यदा यदा विरामसमयः प्राप्यते तदा तौ एतद्विषये चर्चां कुरुतः स्म।

एवं चर्चासमये कदाचित् शाण्डिल्यः उक्तवान्— "अस्माकं गुरोः गुरुः ब्रह्मभट्टारकः अस्ति खलु? तस्य सकाशात् विद्यायाः प्राप्तिः नाम, भगवतः सकाशात् तपसा वरप्राप्तिः इव इति जनाः वदन्ति। अतः अहं चिन्तयामि— तादृशं कठिनं तपः कृत्वा अस्माकं गुरुः विद्यां प्राप्तवान् स्यात्" इति।

"गुरोः गुरुः समर्थतमः स्यात् नाम। किन्तु सः केवलं मार्गदर्शकः। मार्गदर्शनम् उत्तमम् अस्ति चेदपि परिश्रमः नास्ति चेत् प्रयोजनं न भवति। अस्माकं गुरुणा सर्वं स्वपरिश्रमेण एव आर्जितम् इति भाति मम। सः बहूनि शास्त्राणि पठितवान् इति एतावदेव न, लक्षाधिकान् तालग्रन्थान् अपि परशीलितवान् अस्ति इति श्रूयते। यद्यत् पठितं, परिशीलितं च तस्य सर्वस्य अर्थं प्रतिपदं स्मरति सः इत्यपि श्रूयते। एवं स्थिते अपि इदानीम् अपि ग्रन्थानाम् अवलोकनं कुर्वन् भवति सः। अतः, ग्रन्थपरिशीलनतः एव पाण्डित्यं सिद्धम् इति भावयामि अहम्" इति उक्तवान् च्यवनः।

एवं बहुधा 'चर्चा कृता चेदपि गुरोः



—पाण्डित्यस्य मूल कारण किमिति न ज्ञात ताभ्याम्। 'गुरोः समीपं गत्वा एतद्विषये प्रश्नः एव वरम्' इति निर्णीतवन्तौ तौ।

अनन्तरं तौ गुरोः समीपं गत्वा स्वकीयं सन्देहं निवेदितवन्तौ। तदा गुरुः शान्तिभूषणः मन्दहासपूर्वकम् उक्तवान्— "भवतोः एतादृशः सन्देहः युक्तः एव। भवन्तौ एतादृशं सन्देहं प्राप्तवन्तौ यत् तत् मम सौभाग्यं भावयामि। किन्तु अहम् अन्यचिन्ताव्यग्रः अस्मि इदानीम्। वेदान्तसम्बन्धिनः केचन सन्देहाः मां बाधन्ते। तेषाम् उत्तरं वक्तुं समर्थः तु मम विद्यागुरुः ब्रह्मभट्टारकः एकः एव। स तु इदानीं शतवर्षीयः वृद्धः अस्वस्थः च। काशीनगरे तस्य वासः। भवन्तौ काशीनगरं गत्वा तस्य योगक्षेमं विचार्य सः सम्भाषणसमर्थः चेत् मम सन्देहानां समाधानं प्राप्य आगच्छताम्। अनन्तरम् अहं भवतोः सन्देहस्य निवारणं करिष्यामि" इति।

शाण्डिल्यः च्यवनः च गुरोः आदेशस्य अनुगुणं काशीनगरं गतवन्तौ। ब्रह्मभट्टारकस्य गृहम् अन्विष्य गतवन्तौ च। ब्रह्मभट्टारकः शान्तिभूषणस्य सन्देहान् श्रुत्वा— "अहं लेखितुं न शक्नोमि। अहम् उत्तरं वदामि। भवन्तौ लिखताम्" इति उक्तवान्। तालपत्रं कण्टलेखनीं च ताभ्यां दत्तवान्। ब्रह्मभट्टारकेण यद्यत् उक्तं तत्सर्वं लिखितवन्तौ शिष्यौ।

लेखनस्य अनन्तरं तौ ततः निर्गन्तुम् उद्युक्तौ। तदा ब्रह्मभट्टारकः उक्तवान्— "वत्सौ, शान्तिभूषणस्य शिष्यौ भवन्तौ। अतः मया अधिकं किमपि वक्तव्यं नास्ति। शान्तिभूषणेन ये सन्देहाः उद्भाविताः तेषाम् उत्तरम् अहं मानवशास्त्रानुगुणम् उक्तवान् अस्मि। किन्तु मया यत् उक्तं तस्य पठनतः पुनः केचन सन्देहाः उद्भवन्ति। तेषां परिहारं च रसायनशास्त्रज्ञः कर्तुम् अर्हति। तादृशः समर्थः कश्चित् अवन्तीनगरे कुलालवीथ्यां निवसति। तस्य नाम चक्रधरः इति। भवन्तौ यदि तं दृष्ट्वा तस्यापि उत्तराणि प्राप्य एव गच्छतः तर्हि समग्रा प्रक्रिया सुष्ठु स्यात्। भवतोः कार्यतः शान्तिभूषणः सन्तुष्टः

भवेत्'' इति।

शाण्डिल्यः च्यवनः च अवन्तीनगरं गत्वा कुलालवीथ्यां निवसतः चक्रधरस्य गृहं गतवन्तौ। यदा तौ स्वनाम उक्त्वा आगमनकारणम् अपि उक्तवन्तौ तदा चक्रधरः महान्तं सन्तोषं प्रकट्य योगक्षेमम् अपि विचार्य– ''ब्रह्मभट्टारकवर्यः कश्चन महात्मा। यदा अहं बालः आसं तदा काश्यां ब्रह्मभट्टारकाचार्यः स्वगृहस्य पुरतः उपविश्य स्वशिष्यान् यत् पाठयति स्म तत् दूरात् शृणोमि स्म। कदाचित् आचार्यः मां समीपम् आहूय– 'वत्स, चक्रधर! भवतः व्यवहारतः मया ज्ञातं यत् विद्यार्जने भवतः महती इच्छा इति। भवतः वृत्तिकौशलम् अपूर्वम् इति बहूनां मुखतः मया श्रुतम्। ज्ञानसागरस्य इयत्ता ज्ञातव्या इति मम प्रबला इच्छा। एतादृशे कार्ये भवतः अपि साहाय्यम् आवश्यकं भवेत्। ज्ञानार्जनबुद्धिः साहाय्यबुद्धिः च सदा भवतु। भवतः साहाय्यं कालान्तरे स्वीकरिष्यामि' इति उक्त्वा आशिषा अनुगृहीतवान्। इदानीं सौभाग्यवशात् साहाय्यं कर्तुं मया अवकाशः प्राप्तः'' इति उक्त्वा रसायनशास्त्र-सम्बन्धिनां सन्देहानाम् उत्तरम् उक्तवान्। शाण्डिल्यः च्यवनः च तत् यथावत् लिखितवन्तौ।

ततः गन्तुम् उद्यतौ तौ उक्तवान् चक्रधरः– ''आर्यौ, ब्रह्मभट्टारकाचार्येण ये



सन्देहाः उद्भाविताः तेषाम् उत्तरम् अहं मम अनुभवस्य बलात्, ज्येष्ठाः यत् बोधितवन्तः तस्य बलात् च उक्तवान्। किन्तु तानि सर्वाणि शास्त्रानुगुणानि एव स्युः इति विश्वासः नास्ति मम। ब्रह्मभट्टारकाचार्यस्य शिष्येषु अन्यतमः मम आत्मीयः च शान्तिभूषणः नाम पण्डितः उज्जयिन्यां निवसति। सः सकलशास्त्रनिपुणः। पठनमात्रेण एव सः निर्णेतुं शक्नोति यत् किं शास्त्रीयं किम् अशास्त्रीयम् इति। अतः भवन्तौ उज्जयिनीं गत्वा तं पश्यताम्। मया उक्तं सर्वं तस्मै प्रदर्शितं चेत् सः शास्त्रानुगुणत्वम् अस्ति उत न इति निर्णीय वदेत्। मया प्रेषितम् इति भवन्तौ तं वदताम्।

सः अवश्यं भवतोः साहाय्यं करिष्यति" इति।

तदा शाण्डिल्यः च्यवनः च महत् आश्चर्यम् अनुभवन्तौ– "आवां वस्तुतः शान्तिभूषणवर्यस्य एव शिष्यौ। सः आवां ब्रह्मभट्टारकाचार्यस्य समीपं प्रेषितवान्। ब्रह्मभट्टारकाचार्यः च आवां भवत्समीपं प्रेषितवान्" इति उक्त्वा चक्रधरस्य अनुज्ञां प्राप्य गुरुकुलं गतवन्तौ।

उज्जयिनीं गत्वा ब्रह्मभट्टारकाचार्यस्य उत्तरं चक्रधरस्य उत्तरं च शान्तिभूषणाय दत्त्वा प्रवृत्तं समग्रं निवेदितवन्तौ।

सर्वं श्रुत्वा शान्तिभूषणः मन्दहासपूर्वकं शिष्यौ उक्तवान्– "सर्वे मां महापण्डितं भावयन्तः प्रशंसन्ति इति जानीतः खलु भवन्तौ? किन्तु मया अज्ञाताः विषयाः अपि बहवः सन्ति इति एतावता अवगतं स्यात् भवद्भ्याम्। विषयसङ्ग्रहार्थं कियान् परिश्रमः करणीयः इत्यपि भवद्भ्यां ज्ञातं स्यात्" इति।

शाण्डिल्यः च्यवनः च अङ्गीकारपूर्वकं शिरः चालितवन्तौ। तदा शान्तिभूषणः पुनः उक्तवान्– "भवतोः चर्चा आसीत् खलु-ज्ञानप्राप्त्यर्थं गुरोः बोधनं प्रधानम् उत विषयसङ्ग्रहपरिश्रमः इति? वस्तुतः तु उभयम् अपि समं प्राधान्यम् आवहति। ज्ञानस्य इयत्ता तु नास्ति। अतः यावत् ज्ञातं भवति ततोऽपि अधिकतया अज्ञाताः विषयाः भवन्ति लोके। एतत् मनसि निधाय सदा अपि ज्ञानार्जनार्थं प्रयत्नः करणीयः। नूतनाः सन्देहाः यदा उद्भवन्ति तदा तेषाम् उत्तरं प्राप्तुं प्रयत्नः करणीयः। एतादृशी प्रवृत्तिः यस्य भवति सः एव महापण्डितः भविष्यति" इति।

शान्तिभूषणस्य उपदेशं श्रद्धया गृहीतवन्तौ शाण्डिल्यः च्यवनः च। अनन्तरं तौ अपि विविधान् ग्रन्थान् परिशीलयन्तौ सन्देहानां निवारणार्थं गुरोः मार्गदर्शनं प्राप्नुवन्तौ ज्ञानार्जनं कृतवन्तौ। अतः तौ कालान्तरे विख्यातौ पण्डितौ जातौ।






इन्द्रजिता प्रयुक्तेन नागपाशेन बद्धयोः रामलक्ष्मणयोः प्रथमं रामः सचेतनः जातः। लक्ष्मणस्य दुर्दशां दृष्ट्वा अश्रूणि स्नावितवान् सः। एतत् दृष्टवतां वानराणां मुखतः अपि अश्रूणि आगतानि। तावता रामलक्ष्मणयोः मूर्च्छावस्थां श्रुत्वा तत्र आगतवान् विभीषणः। तं दूरात् दृष्ट्वा 'इन्द्रजित् एव अत्र प्रत्यक्षम् आगतः' इति चिन्तयित्वा पलायितवन्तः केचन वानराः।

'रामलक्ष्मणयोः एव एषा दशा चेत् इतः परं लङ्कासिंहासनप्राप्तिः स्वप्नायते एव' इति आलोच्य दीर्घं निःश्वसितवान् विभीषणः। "इन्द्रजित् एतादृशं घोरं कृत्यं कुर्यात् इति न निरीक्षितम् आसीत् मया" इति निराशया उक्तवान् सः।

तदा सुग्रीवः विभीषणम् उक्तवान्— 'मित्र! एतावता एव इन्द्रजित् रावणः च जयं प्राप्तवन्तौ इति मा निर्णयतु। तयोः संहारः भवतः सिंहासनप्राप्तिः च विधिनिर्णीतः। अतः तदुभयम् अपि भविष्यति एव। रामलक्ष्मणयोः प्राणापायः तु नास्ति। युद्धे एतादृश्यः घटनाः सहजाः। एतया घटनया अस्माभिः ज्ञातं यत् अग्रे कीदृशः विशेषसन्नाहः करणीयः इति। अतः केनापि निरुत्साहिना न भवितव्यम्। युद्धं तु अनुवर्तिष्यते एव" इति।

अनन्तरं सः सुषेणम् आहूय— "यदा एतौ रामलक्ष्मणौ सचेतनौ भवतः तदा भवान् एतौ किष्किन्धां नयतु। भवता सह केचन वानरवीराः अपि भवन्तु। अहं रावणं



सपरिवारं संहृत्य सीतया सह तत्र आगमिष्यामि'' इति उक्तवान्। 'रामाय यत् वचनं दत्तं तदनुगुणं रावणं संहरिष्यामि। अथवा एतस्मिन् एव कार्ये प्राणान् वा अर्पयामि' इति दृढः निश्चयः आसीत् तस्य मनसि।

तदा सुषेणः सुग्रीवम् उक्तवान्– ''पूर्वं देवदानवयोः युद्धं प्रचलति स्म खलु? तदा अपि दानवाः मायाबलम् आश्रित्य युद्धं कुर्वन्तः देवान् पीडयन्ति स्म। तत्कारणतः केचन मूर्च्छिताः भवन्ति स्म, पुनः केचन मृताः भवन्ति स्म अपि। तत्काले देवैः अमृतं न पीतम् आसीत्। अतः देवानां गुरुः बृहस्पतिः मृतसञ्जीविनीविद्यया देवान् उज्जीवयति स्म। विशल्यकरणिः सञ्जीवकरणिः इति द्विविधं मूलं क्षीरसमुद्रसमीपे स्थिते पर्वते अस्ति इति श्रूयते। यत्र समुद्रमथनं प्रवृत्तं तत्र चन्द्रपर्वतः द्रोणपर्वतः च स्तः। तत्र पूर्वोक्तानि मूलानि भवन्ति। अतः हनूमन्तं प्रेषयित्वा तानि मूलानि आनाययतु'' इति।

तावता प्रलयमारुतसदृशः मारुतः तत्र उत्पन्नः। वानराः आश्चर्येण आकाशं दृष्टवन्तः। क्षणाभ्यन्तरे गरुडः तत्र उपस्थितः। गरुडस्य आगमनतः उत्पन्नस्य वायोः स्पर्शतः एव भीताः बाणरूपिणः सर्पाः ततः पलायितवन्तः। गरुडः रामलक्ष्मणयोः पार्श्वे उपविश्य सर्वाणि अङ्गानि स्पृष्टवान्। तेन रामलक्ष्मणयोः शरीरे जाताः सर्वे व्रणाः उपशान्ताः।

रामः उत्थाय गरुडम् उक्तवान्– ''पक्षिराज! भवतः दयया आवां स्वस्थौ जातौ। पूर्वतनं बलम् अपि प्राप्तम्। भवतः दर्शनात् अहं पितरं दशरथमहाराजं पितामहम् अजमहाराजं च स्मरामि। भवतः दर्शनात् कश्चन आनन्दः, कश्चन आत्मीयभावः। वस्तुतः कः भवान्?'' इति।

''राम! भवतः मित्रम् अहम्। भवतोः साहाय्यार्थम् अत्र आगतवान्। गरुत्मान् इति मम नाम। बाणरूपेण सर्पाः भवन्तं बद्धवन्तः आसन्। सर्पग्रहणतः विमोचनं नितरां दुःसाध्यम्। अतः अहम् अत्र आगतः। मम दर्शनतः सर्पाः पलायितवन्तः। भवतोः

सुस्थितिं दृष्ट्वा सन्तुष्टः अस्मि। एतस्मिन् युद्धे भवद्भिः विशेषजागरूकता आश्रयणीया। राक्षसाः बहुविधानि मायातन्त्राणि जानन्ति। तानि कीदृशानि स्युः इति ऊहां अपि कर्तुं न शक्यम्। अतः राक्षसानाम् एतां विशिष्टां शक्तिं कुटिलमतिं च मनसि निधाय एव युद्धं करणीयम्। सर्वेषां तन्त्राणां प्रतितन्त्राणि चिन्तनीयानि'' इति उक्तवान् गरुडः।



रामः कृतज्ञतापूर्वकं गरुडं दृष्टवान्। तदा गरुडः पुनः उक्तवान्– ''राम, अहं भवतः मित्रं कथम् इति इदानीं मा पृच्छतु। युद्धे जयप्राप्तेः अनन्तरं भवता सर्वं स्वयं ज्ञायते। युद्धे भवतः जयः निश्चितः। प्राणप्रिया सीता भवता प्राप्यते। भवतः कीर्तिः लोके प्रसरिष्यति। इदानीम् अहं गन्तुम् इच्छामि। अनुज्ञादानेन अनुग्रहणीयः अहम्'' इति। अनन्तरं सः रामस्य अनुज्ञां प्राप्य आकाशमार्गेण ततः निर्गतवान्।

रामलक्ष्मणौ यथापूर्वं कुशलिनौ दृष्ट्वा सन्तुष्टाः वानराः कूर्दन्तः नृत्यन्तः च जयघोषं कृतवन्तः– 'जयतु श्रीरामः' 'जयतु लक्ष्मणः' इति। वानरैः कैश्चित् भेरीकाहलादयः वादिताः। केचन समीपस्थान् वृक्षान् उत्पाट्य तेन लङ्काद्वारं ताडयन्तः भञ्जनार्थं प्रयत्नं कृतवन्तः। एतत्सर्वं मध्यरात्रे प्रवृत्तम्।

मध्यरात्रे वानरैः कृतं जयघोषं श्रुत्वा रावणः राक्षसप्रमुखाः च आश्चर्यचकिताः। रावणः मन्त्रिणः दृष्ट्वा– ''वानराः महता आनन्देन सन्ति इति भासते। किम् एतस्य कारणम्? रामलक्ष्मणयोः दुरवस्थां दृष्ट्वा यैः रोदनं करणीयम् आसीत् ते वानराः इदानीं सन्तोषेण सन्ति इति तु महतः आश्चर्यस्य विषयः। त्वरया गत्वा वस्तुस्थितिं ज्ञात्वा आगच्छन्तु'' इति आज्ञापितवान्। 'वस्तुस्थितिं ज्ञात्वा आगच्छन्तु' इति भटान् आज्ञापितवन्तः मन्त्रिणः। वस्तुस्थितिं ज्ञातुं झटिति गतवन्तः केचन राक्षसभटाः।

ते राक्षसाः प्राकारम् आरुह्य उत्साहयुक्तां वानरसेनां, नागपाशमुक्तौ रामलक्ष्मणौ च दृष्ट्वा प्रत्यागत्य रावणं सर्वं निवेदितवन्तः।

'पुत्रेण इन्द्रजिता प्रयुक्तानां बाणानां



सारथिं सः आज्ञापितवान् यत् पश्चिमद्वारसमीपं रथं नयतु इति।

धूम्राक्षस्य आगमनं दृष्ट्वा वानराः उच्चैः सिंहनादं कृतवन्तः। राक्षसाः अपि वीरगर्जनं कृतवन्तः। पक्षद्वयस्य शब्देन स च प्रदेशः व्याप्तः। तेनैव सह आयुधानां सङ्घर्षध्वनिः अपि उत्पन्नः। राक्षसाः मारकायुधैः वानरान् प्रहरन्ति स्म। वानराः च वृक्षशिलादीन् क्षिपन्तः युद्धं कुर्वन्ति स्म। कदाचित् वानराः राक्षसान् गृहीत्वा अन्यराक्षसानाम् उपरि क्षिपन्ति स्म। तथैव राक्षसानाम् आयुधं बलात् स्वीकृत्य प्रतिप्रहारम् अपि कुर्वन्ति स्म वानराः। व्रणादिकम् उपेक्ष्य वानराः उत्साहेन अग्रे गच्छन्तः युद्धं कुर्वन्ति स्म। राक्षसपक्षे बहूनां मरणं दृश्यते स्म। एतस्मात् भीताः केचन राक्षसाः ततः पलायनं कर्तुम् उद्युक्ताः। एतत् दृष्ट्वा धूम्राक्षः स्वयम् अग्रे आगत्य वानराणां संहारार्थम् उद्युक्तः अभवत्। इदानीं वानरपक्षे अपि बहूनि मरणानि दृष्टानि।

धूम्राक्षेण क्रियमाणं वानरसेनायाः नाशं दृष्ट्वा हनूमान् क्रुद्धः अभवत्। सः एकां बृहतीं शिलाम् उन्नीय धूम्राक्षस्य रथस्य उपरि क्षिप्तवान्। रथः चूर्णीकृतः अभवत्। शिलापतनं जानन् धूम्राक्षः उत्प्लुत्य भूमौ स्थित्वा आत्मानं रक्षन् युद्धार्थं गदां गृहीतवान्।

तदा हनूमान् समीपस्थम् एकं महावृक्षम्

बन्धनतः विमोचनं प्राप्य रामलक्ष्मणौ यथापूर्वं जातौ' इति वार्तां शृण्वतः रावणस्य मुखं म्लानं जातम्। 'कथं सर्पास्त्राणि निष्फलानि जातानि? मूर्च्छावस्थायां स्थितः शत्रुः न मारणीयः इति उद्देशेन सर्पाणां शक्तिः निगृहीता यत् तदेव दोषाय जातम्' इति चिन्तयन् सः धूम्राक्षं पश्यन् उक्तवान्— "सेनया सह गत्वा रामं लक्ष्मणं वानरसेनां च समूलं नाशयित्वा आगच्छतु" इति।

धूम्राक्षः ततः निर्गत्य सेनाध्यक्षम् आज्ञापितवान् यत् मदर्थं सेना सज्जीकरणीया इति। अल्पे एव काले विविधैः घोरैः अस्त्रैः समेता राक्षससेना सन्नद्धा जाता। तया सेनया सह रथारूढः धूम्राक्षः युद्धभूमिं गतवान्।

उत्पाट्य शाखाभिः राक्षसान् निर्दयं प्रहरन् मारितवान्। एतत् दृष्ट्वा भीताः राक्षसाः ततः पलायितवन्तः। हनूमान् धूम्राक्षस्य पुरतः आगत्य स्थितवान्।

धूम्राक्षः हनूमन्तं क्रोधेन पश्यन् गदया शिरसि प्रहृतवान्। किन्तु तेन प्रहारेण हनूमान् वेदनाम् अप्राप्नुवन् पार्श्वे उत्प्लुत्य पर्वतशिखरखण्डम् उन्नीय धूम्राक्षस्य उपरि पातितवान्। एतेन धूम्राक्षः प्राणान् अत्यजत्। धूम्राक्षस्य मरणं दृष्ट्वा वानराः द्विगुणितम् उत्साहं प्राप्य राक्षसानाम् उपरि आक्रमणं कृतवन्तः। भीताः राक्षसाः ततः पलाय्य दुर्गं प्रविष्टवन्तः।



धूम्राक्षस्य मरणवार्तां श्रुतवतः रावणस्य दुःखं क्रोधश्च। सः वज्रदंष्ट्रनामकं राक्षसवीरं दृष्ट्वा उक्तवान्– "भवान् इदानीम् एव गत्वा रामं सुग्रीवं च संहृत्य विजयवध्वा सह आगच्छतु। युद्धे समग्रा शक्तिः प्रदर्शनीया भवता" इति।

वज्रदंष्ट्रः विविधासु मायाविद्यासु निपुणः सः कवचादिकं धृत्वा धनुर्बाणादिकं स्वीकृत्य रथम् आरुह्य युद्धार्थं प्रस्थितवान्। विविधानि मन्त्रास्त्राणि धृत्वा राक्षसवीराः बहवः तम् अनुसृतवन्तः।

वज्रदंष्ट्रः सेनया सह दक्षिणद्वारसमीपं गतवान्। तत्र युवराजः अङ्गदः वानरसेनायाः अग्रणीः आसीत्। वानर-राक्षसयोः युद्धम् आरब्धम्। राक्षसाः वानराणां संहारे उद्युक्ताः जाताः। वानराणां नाशं दृष्ट्वा क्रुद्धः अङ्गदः उग्ररूपं प्राप्य राक्षसानां संहारम् आरब्धवान्। मुष्टिप्रहारमात्रेण राक्षसान् संहरति स्म अङ्गदः। यमः एव अङ्गदरूपेण आगत्य संहारं कुर्वन् अस्ति इति भावितवन्तः राक्षसाः।

अङ्गदेन क्रियमाणं राक्षससंहारं दृष्टवतः वज्रदंष्ट्रस्य क्रोधः प्रवृद्धः। सः अङ्गदस्य अभिमुखम् आगतवान्। अङ्गदःमहाशिलाम् एकाम् उन्नीय वज्रदंष्ट्रस्य रथस्य उपरि पातितवान्। तेन वज्रदंष्ट्रस्य रथः भग्नः। वज्रदंष्ट्रः भूमौ उत्प्लुत्य गदाम् उन्नीय पुनः युद्धम् आरब्धवान्। अङ्गदस्य प्रहारेण अचिरात् एव मूर्च्छां गतः च।



अल्पे एव काले चेतनां प्राप्य वज्रदंष्ट्रः गदया अङ्गदं वक्षःस्थले प्रहृतवान्। तेन अङ्गदः किञ्चिदपि न व्रणितः, अपि तु वज्रदंष्ट्रस्य गदा एव हस्तच्युता जाता। अनन्तरं तौ मुष्टियुद्धम् आरब्धवन्तौ। मुष्टियुद्धेन श्रान्तौ तौ जानुभ्याम् उपविश्य खड्गयुद्धम् आरब्धवन्तौ। अङ्गदः झटिति अग्रे आगत्य बलयुतेन प्रहारेण वज्रदंष्ट्रस्य शिरः कर्तितवान्। तदीयं मुण्डं रुण्डात् पृथग्भूय भूमौ पतितम्।

वज्रदंष्ट्रस्य मरणस्य वार्तां श्रुत्वा रावणः अकम्पनं सेनया सह युद्धार्थं प्रेषितवान्। सुदृढं रथम् आरुह्य गर्वेण व्यवहरन् अकम्पनः सेनया सह रणरङ्गं गतवान्।

वानर-राक्षसयोः घोरं युद्धं पुनः प्रारब्धम्। पक्षद्वये अपि बहवः मृताः। कुमुदः, नलः मैन्दः, द्विविदः इत्यादयः वानरवीराः असाधारणं शौर्यं प्रदर्शयन्तः राक्षसान् मारयन्तः आसन्।

वानरवीराणां शौर्यप्रदर्शनं दृष्ट्वा क्रुद्धः अकम्पनः स्वरथं तेषां समीपं नीतवान्। अकम्पनस्य पुरतः वानरवीराः हतशक्तयः जाताः। एतत् दृष्ट्वा हनूमान् तत्र आगतवान्। हनूमन्तं दृष्ट्वा द्विगुणितम् उत्साहं प्राप्य अकम्पनः बाणवर्षणं कृतवान्। हनूमान् तान् बाणान् लीलया अपसार्य उच्चैः सिंहगर्जनं कृत्वा पादेन सकृत् भूमिं प्रहृत्य महाशिलाम् एकाम् उन्नीय छत्रम् इव उपरि गृहीत्वा अग्रे आगतवान्।

अकम्पनः स्वबाणैः तां शिलां चूर्णीकृतवान्। तदा हनूमान् एकं महावृक्षम् उत्पाट्य अकम्पनं शिरसि प्रहृतवान्। एतेन अकम्पनः गतप्राणः जातः।

एतत् दृष्ट्वा राक्षसाः आयुधानि तत्रैव परित्यज्य प्राणरक्षणार्थं लङ्कां प्रति धावितवन्तः।

घोराकारम् अकम्पनं संहृतवन्तं हनूमन्तं वानराः बहुधा श्लाघितवन्तः। 'जयतु हनूमान्' इति जयघोषम् उच्चैः कृतवन्तः। एषः जयघोषः राक्षसानां हृदयेषु भीतिं जनयति स्म।

अकम्पनस्य मरणं श्रुत्वा रावणः क्षणकालं

चिन्ताग्रस्तः जातः। अनन्तरं मन्त्रिणं आहूय सः समालोचनं कृतवान्। सेनाव्यवस्थायाः परिशीलनार्थं सर्वत्र स्वयं गत्वा आगतवान्।

रावणः सर्वं दृष्ट्वा सभाभवनं प्रत्यागत्य प्रहस्तं दृष्ट्वा उक्तवान्– "शत्रुसैन्यं नगरद्वारे उपस्थितम् अस्ति। एतस्य शत्रुसैन्यस्य नाशार्थं सामान्यस्य प्रेषणेन किमपि प्रयोजनं न भवति इति भाति। शत्रुसैन्यं नाशयितुम् अहं,कुम्भकर्णः, भवान्, इन्द्रजित्, निकुम्भश्च समर्थाः, न अन्ये। अतः इदानीं भवान् महत्या सेनया सह गत्वा वानरसेनां नाशयित्वा विजयवध्वा सह प्रत्यागच्छतु" इति।

तदा प्रहस्तः उक्तवान्– "युद्धनिवारणस्य विषये इतः पूर्वम् आवाभ्यां चर्चा कृता एव। सीता रामाय प्रत्यर्पणीया इति मया सूचितम्। एवं न कृतं चेत् युद्धम् अनिवार्यम् इत्यपि मया उक्तम् आसीत्। किन्तु मम वचनं भवते न अरोचत। अतः युद्धम् उपस्थितम् अस्ति। अस्तु तावत्, अहं भवदर्थं प्राणान् अपि अर्पयितुं सिद्धः एव। भवान् चिन्ता परित्यजतु। अहं वानरसेनां नाशयित्वा आगमिष्यामि" इति।

एतावत् उक्त्वा ततः गत्वा प्रहस्तः सेनाध्यक्ष्यम् आज्ञापितवान्·यत् महती सेना युद्धार्थं सज्जीकरणीया इति। राक्षसवीराः होमं कृत्वा प्रसादं प्राप्य युद्धार्थं गन्तुं सन्नद्धाः जाताः। प्रहस्तः रणभेरीं वादयित्वा रथम् आरुह्य रणरङ्गं प्रति प्रस्थितवान्। नरान्तकः, कुम्भहा, महानादः, समुन्नतः इत्येते मन्त्रिणः तम् अनुसृतवन्तः।

प्रहस्तस्य आगमनं दूरात् दृष्ट्वा रामः विभीषणं पृष्टवान्– "महावीरः कश्चन आगच्छन् अस्ति इति भाति। कः सः?" इति।

"सः रावणस्य सेनानायकः प्रहस्तः। रावणस्य सेनायाः सज्जीकरणे एतस्य एव प्राधान्यम्। मन्त्रास्त्राणि बहूनि सन्ति एतस्य समीपे। पराक्रमेण असमानः एषः। एतस्य दर्शनतः त्रिलोकी अपि कम्पिता भवति" इति उक्तवान् विभीषणः।





# आकाशस्य स्तम्भाः

कस्मिंश्चित् ग्रामे पूर्वं भीमः नाम कश्चित् आसीत्। सः नितरां मन्दमतिः, किन्तु शरीरेण सुदृढः। ग्रामीणाः यद्यत् कार्यं वदन्ति तत्तत् कुर्वन्, तैः यावत् दीयते तावत् सन्तोषेण स्वीकुर्वन् सः जीवति स्म।

कदाचित् भीमः कुत्रापि आतृप्ति भोजनं कृत्वा रज्जुनिर्मितं मञ्चम् अङ्गणे प्रसार्य सुखेन उत्तानं शयनं कृतवान्। तदा सहजतया आकाशे तस्य दृष्टिः पतिता। सुखेन शयानस्य तस्य मनसि कश्चन विचित्रः विचारः उत्पन्नः - 'आकाशः नाम देवेन प्रपञ्चस्य रक्षणार्थं निर्मितम् अपूर्वं वितानम्। लोके दृश्यते यत् सामान्यस्य वितानस्य अपि स्तम्भाः भवन्ति इति। किन्तु आकाशरूपिणः वितानस्य स्तम्भाः एव न दृश्यन्ते। आकाशः पतितः चेत् का वा गतिः? स्तम्भरहितम् आकाशवितानं यदा कदापि पतितुम् अर्हति' इति।

भीमः आकाशपतनभीत्या झटिति उत्थितवान्। धावन् ग्रामसीमायां स्थितस्य विशालस्य वटवृक्षस्य समीपं गतवान् च। 'अहो रक्षितः अहम्' इति तृप्त्या निश्श्वसितवान् सः। यदि आकाशः पतेत् तर्हि वृक्षस्य शाखाः मदुपरि सन्ति इत्यतः मम कोऽपि हानिः न भविष्यति इति तस्य चिन्तनम्।

प्रातःकालपर्यन्तं सः वृक्षस्य अधः एव स्थितवान्। सूर्योदयानन्तरं ग्रामं गत्वा अभिमुखम् आगतान् ग्रामीणान् उक्तवान् सः– "वितानस्य स्तम्भाः बहवः भवेयुः। किन्तु आकाशवितानस्य एकः अपि स्तम्भः न दृश्यते। यदि आकाशः पतेत् तर्हि वयं सर्वे मृताः भवेम। इदानीं कोऽपि उपायः चिन्तनीयः एव। यत्र आकाशः न भवति तादृशं स्थलम् अन्वेष्टव्यम्" इति।

"एतस्य तु मतिभ्रान्तिः" इति वदन्तः



केचन हसितवन्तः। 'अहो मूर्खता' इति उक्तवन्तः केचन। 'अलम् असम्बद्धप्रलापेन' इति तर्जितवन्तः केचन। किन्तु कोऽपि योग्यं समाधानं तु न उक्तवान्।

यदा जनाः एतम् उन्मत्तः इति उक्तवन्तः तदा एषः— 'वस्तुतः जनाः एव उन्मत्ताः। अपायः उपस्थितः चेदपि तद्विषये अचिन्तयन्तः एते एव मूर्खाः। एतैः सह वार्तालापेन किम्? अहं तु जीवितुम् इच्छामि। आकाशरहिते प्रदेशे निश्चिन्ततया स्थास्यामि' इति आलोच्य भीमः ग्रामात् प्रस्थितवान्। द्वित्राः ग्रामाः अतिक्रान्ताः तेन। अरण्यमार्गः अपि प्राप्तः। तावता कश्चित् अभिमुखम् आगतः। भीमः तं स्वकीयं भयं निवेदितवान्।

तदा सः— "अये,भवतः मतिभ्रान्तिः तु न खलु? आकाशस्य स्तम्भाः कथं भवन्ति? मूर्खः भवान्" इति उक्त्वा अग्रे गतवान्।

'सरलः कश्चन विषयः अपि केनापि न अवगम्यते। अहो दौर्भाग्यम्!' इति चिन्तयन् भीमः अग्रे गतवान्। बहुदूरं यावत् गतवान् सः। अरण्यं तु न अतिक्रान्तम्। कोऽपि ग्रामः अपि न प्राप्तः। सः पुनरपि अग्रे गतवान्। एवं गच्छन् उपरि दृष्टवान्। वृक्षाणाम् उपरिभागे आकाशः दृष्टः। आकाशरहितं स्थलं प्राप्तुम् इतोऽपि सुदूरं गन्तव्यम् इति आलोच्य सः अग्रे गतवान्।

रात्रिः आगता। प्रातःकालपर्यन्तं प्राणान् रक्षितुं सः विशालस्य वृक्षस्य अधः स्थितवान्।

वृक्षस्य अपरस्मिन् भागे कश्चन मुनिः उपविश्य नेत्रे निमील्य ध्यानमग्नः आसीत्। भीमस्य आगमनशब्दं श्रुत्वा सः नेत्रे उन्मीलितवान्। भीमः तस्य समीपं गत्वा— "अहो, सौभाग्यम्। बुद्धिमान् भवान् एकः वा मिलितः। आकाशः पतेत् इति भीत्या खलु भवान् वृक्षस्य अधः उपविष्टवान् अस्ति?" इति पृष्टवान्।

एतत् श्रुत्वा एव मुनिः ज्ञातवान् यत् एषः मन्दमतिः इति। "भोः, आकाशपतनं कथं सम्भवेत्?" इति मन्दहासपूर्वकं पृष्टवान् सः।

"वितानस्य स्तम्भाः यथा भवन्ति तथा

विशालस्य आकाशवितानस्य बहवः स्तम्भाः भवेयुः। किन्तु एकोऽपि स्तम्भः न दृश्यते। एवं चेत् आकाशः पतेत् एव खलु?" इति उक्तवान् भीमः।

"भवतः सन्देहः अवगतः मया। आकाशस्य स्तम्भाः न सन्ति इति केन उक्तम्? स्तम्भाः तु सन्ति एव। अहं प्रदर्शयिष्यामि। इदानीं रात्रिः। श्वः प्रातः भवान् अनतिदूरे स्थितं ग्रामं गत्वा ग्रामीणान् सम्यक् भर्त्सयित्वा भिक्षां प्राप्य आगच्छतु। अनन्तरं अहम् आकाशस्य स्तम्भान् प्रदर्शयिष्यामि" इति उक्तवान् मुनिः।

प्रातः भीमः अनतिदूरे स्थितं ग्रामं गतवान्। 'दुष्टे, वञ्चिके, भिक्षां ददातु' 'द्वारं पिधाय तिष्ठति खलु अविवेकिनि! शीघ्रं भिक्षां ददातु' 'भिक्षां ददातु बराके!' 'भवनं तु महत्, भिक्षा च अल्पा। धिक् भवतीम्' इत्येवं बहुधा निन्दितवान् भीमः।

भर्त्सनकारणतः तेन कुत्रापि भिक्षा न प्राप्ता। अन्ते निराशया सः प्रतिगन्तुम् उद्युक्तः। तावता काचित् गृहिणी भीमम् आहूय अञ्जलिमितं तण्डुलं दत्त्वा— "स्वीकरोतु भोः। बुभुक्षितस्य मुखतः भर्त्सनं सहजतया निर्गच्छेत्। सहजम् एतत्" इति उक्त्वा अन्तः गतवती।

भीमः अरण्यं प्रतिगत्य वृक्षमूले उपविष्टं मुनिं प्रवृत्तं समग्रं निवेदितवान्।

तदा मुनिः हसन्— "पश्यतु। सा गृहिणी भवता भर्त्सनं कृतं चेदपि करुणया भिक्षां दत्तवती। अल्पम् अपि कोपं न प्रदर्शितवती। एतादृशाः जनाः यद्यपि नितरां विरलाः, तथापि एते एव आकाशस्य स्तम्भाः। एतादृशाः स्तम्भाः लोके सन्ति केचन। अतः एव आकाशः न पतति" इति उक्तवान्।

भीमः अङ्गीकारं प्रदर्शयन् शिरः चालितवान्। भयं निवारितवन्तं मुनिं साष्टाङ्गं नमस्कृत्य तस्य सेवार्थं तत्रैव स्थितवान् सः। मुनिः सरलेन क्रमेण विविधान् विषयान् सहनया बोधयन् भीमं विवेकिनं कृतवान्।





# अपूर्वः स्यूतः

इटलीदेशस्य सैन्ये पूर्वं कश्चन साहसी सैनिकः आसीत्। तस्य नाम आसीत् बेप्पो पि पेट्टालः इति। कदाचित् पेट्टालः कस्यचित् कार्यस्य निमित्तं कुत्रापि गच्छन् आसीत्। तदा निर्जनः अरण्यप्रदेशः तेन प्राप्तः। पेट्टालः तु विना भीतिम् अग्रे गच्छन् अस्ति। एवं गमनसमये उभाभ्यां चोराभ्यां गृहीत्वा ताड्यमानः कश्चन वणिक् दृष्टः। एतेन कुपितः पेट्टालः वेगेन अग्रे गत्वा चोरौ गृहीत्वा सम्यक् ताडितवान्। प्रहारं प्राप्य चोरौ पलायितवन्तौ। वणिक् व्रणितः तु न आसीत्। अतः पेट्टालः वणिजम् उत्थाप्य परिचयादिकं किमपि अपृष्ट्वा स्वमार्गम् अनुसृतवान्।

यं सः रक्षितवान् सः न अन्यः, अपि तु वणिग्वेषधारी तद्देशीयः राजा एव। देशस्य स्थितिं ज्ञातुं सः एवं वेषान्तरेण अटन् तत्र आगतः आसीत्। पेट्टालेन कृतम् उपकारं कृतज्ञतापूर्वकं स्मरति स्म राजा। अतः सः राजधानीं गत्वा भटद्वारा पेट्टालं स्वसमीपम् आनाय्य– "इतः परं सैनिकबन्धनं नास्ति भवतः। अद्य आरभ्य स्वतन्त्रः भवान्। यथा भवान् इच्छति तथा करोतु। कोऽपि सैन्याधिकारी आदेशेन भवन्तं निर्बन्धुं न अर्हति। आजीवनं भवतः सर्वः अपि व्ययः निरुह्यते मया" इति उक्तवान्।

पेट्टालः तत्क्षणे एव सैनिकवेषम् अपनीय क्षिप्तवान्। ततः आरभ्य कोषागारतः यथेच्छं धनं प्राप्नुवन् सः सुखेन जीवितुम् उद्युक्तः अभवत्।

कदाचित् कश्चन वृद्धः सैनिकः तं पृष्टवान्– "कः भवान्?" इति।

"अहं सैनिकः" इति उक्तवान् पेट्टालः।

"एवं तर्हि भवतः सैनिकस्यूतः कुत्र?" इति पृष्टवान् सः वृद्धसैनिकः।

"इटलीदेशीया जानपदकथा"

इति कञ्चित् पृष्टवान् पेट्टालः।

"वस्तुस्थितिं न जानाति वा भवान्? अद्य रात्रौ कश्चन राक्षसः आगत्य राजकुमारीं नेष्यति। केभ्यश्चित् वर्षेभ्यः पूर्वं कस्मिंश्चित् पत्रे बलात्कारेण राज्ञः हस्ताङ्कनं प्राप्तवान् आसीत् सः। इदानीं तत् पत्रं प्रदर्श्य राजानं न्यायजालेन बद्धवान् अस्ति राक्षसः। धर्मात्मा राजा अनन्यगत्या पुत्र्याः नयनम् अङ्गीकृतवान् अस्ति। अतः सर्वे चिन्तासागरे निमग्नाः सन्ति" इति उक्तवान् नागरिकः कश्चित्।



"युक्ते काले आगतवान् अस्मि अहम्' इति चिन्तयन् पेट्टालः राज्ञः समीपं गत्वा "सैनिकः सन् अपि किमपि कार्यम् अकृत्वा सुखेन जीवितुम् अनुमतिं प्राप्तवान् अस्मि। राजा मां पोषयति" इति उक्तवान् पेट्टालः।

"सुखी पुरुषः भवान्" इति उक्तवान् वृद्धः सैनिकः। क्षणकालस्य अनन्तरं पेट्टालं पुनः उक्तवान् सः— "भोः, एतं स्यूतं स्वीकरोतु भवान्। एतावत्पर्यन्तम् एतस्य स्यूतस्य साहाय्येन प्रभूतं मनोविनोदं प्राप्तवान् अस्मि। विशिष्टः स्यूतः एषः। एतस्य मुखम् उद्घाट्य यस्य पुरतः स्थित्वा भवान् 'अन्तः पततु' इति वदति सः स्यूतस्य अन्तः पतति। यावत् स्यूतस्य मुखं पुनः भवता न उद्घाट्यते तावत् स्यूतस्य अन्तः एव भवति सः। युवकः भवान् एतं स्यूतं स्वीकृत्य सन्तोषेण जीवतु" इति।

पेट्टालः सन्तोषेण तं स्यूतं स्वीकृतवान्। ये तस्य उपहासं कृतवन्तः, ये च असूयां प्रदर्शितवन्तः तान् स्यूते पातयति स्म पेट्टालः। स्यूते पतिताः ते बहुधा क्लेशम् अनुभवन्ति स्म। अन्ते दैन्येन बहुधा प्रार्थयित्वा कथमपि स्यूततः बहिः आगत्य पलायनं कुर्वन्ति स्म। ततः कदापि पेट्टालं न पीडयन्ति स्म।

ततः वर्षद्वयस्य अनन्तरं पेट्टालः कदाचित् राजधानीम् आगतवान्। राजधान्यां सर्वे चिन्ताक्रान्ताः दृष्टाः तेन। सर्वेषां गृहस्य पुरतः शोकसूचकं कृष्णवर्णीयं वस्त्रम् उत्तोलितम् आसीत्।

"किमर्थं राजधान्यां सर्वत्र एवं कृतम्?"



उक्तवान्– "महाप्रभो, भवता अहं बहुधा उपकृतः अस्मि। अतः प्रत्युपकाररूपेण भवतः पुत्रीं राक्षसतः रक्षिष्यामि अहम्" इति।

"भवतः साहसप्रवृत्तिः मया प्रत्यक्षं दृष्टा। किन्तु इदानीं तया प्रवृत्त्या न किमपि प्रयोजनम्। यतः 'पुत्रीं दास्यामि' इति पत्रे मम हस्ताङ्कनम् अस्ति। धर्मसूत्रेण बद्धः अस्मि" इति उक्तवान् राजा।

"प्रभो, राक्षसः वञ्चनया एव पत्रे हस्ताङ्कनं प्राप्तवान्। अतः तादृशेन एव उपायेन अस्माभिः अपि इष्टं साधनीयम्। राजकुमार्याः पार्श्वे स्थितं प्रकोष्ठं मदधीनं करोतु। तं प्रकोष्ठं प्रविश्य एव राक्षसः राजकुमारीसमीपं यथा गच्छेत् तथा व्यवस्थां करोतु। सुदृढम् एवं दण्डं मह्यं ददातु। अग्रे यथोचितम् अहं करिष्यामि" इति सूचितवान् पेट्टालः।

पेट्टालः पुत्रीम् अपायात् रक्षेत् इति विश्वासः अल्पः अपि नास्ति महाराजस्य। तथापि पेट्टालस्य वचनस्य अनुगुणं सर्वाः व्यवस्थाः कृतवान्। पेट्टालः प्रकोष्ठं प्रविश्य उत्पीठिकायाः उपरि उद्घाटितं स्यूतं संस्थाप्य गवाक्षस्य द्वारम् उद्घाट्य राक्षसस्य प्रतीक्षां कुर्वन् उपविष्टवान्।

मध्यरात्रसमये महत् गर्जनं श्रुतम्। भूमिः कम्पिता अभवत्। आकाशात् नक्षत्रं यथा पतति तथा भूमिं प्राप्य राक्षसः राजभवनं प्रविष्टवान्। गवाक्षमार्गेण अन्तः आगतं राक्षसं दृष्ट्वा उक्तवान् पेट्टालः– 'अन्तः पततु' इति। राक्षसः स्यूते पतितः।

स्यूतस्य अन्तः स्थितः राक्षसः क्षणकालं गर्जनं कृतवान्। अनन्तरम् असहायकतया मौनम् आश्रितवान्। तदा पेट्टालः पृष्टवान्– "किमर्थम् अत्र आगतः भवान्?" इति।

तदा राक्षसः कोपेन उक्तवान्– "मम आगमनस्य, भवतः च न कोऽपि सम्बन्धः" इति।

"सम्बन्धः कः इति निर्णेता अहम्। यतः इदानीं मदधीनः अस्ति भवान्। राजकुमारीम् अपहर्तुम् आगतः खलु भवान्? भवतः प्रयत्नं विफलं कर्तुम् आगतः अस्मि अहम्।

राजकुमारीं न अपहरिष्यामि इति भवान् वचनं ददाति चेत् अहं भवन्तं बन्धविमुक्तं करिष्यामि" इति उक्तवान् पेट्टालः।

"तत् तु सर्वथा न शक्यते। अद्य मध्यरात्रस्य अनन्तरं राजकुमारी मदधीना स्यात्। राज्ञः हस्ताङ्कनेन युक्तं पत्रम् एव अत्र प्रमाणम्" इति उक्तवान् राक्षसः।

"तत् अहम् अपि जानामि। यदि पीडा न अपेक्ष्यते तर्हि पत्रं विच्छिद्य क्षिपतु। अन्यथा पीडां सोढुं सिद्धः भवतु" इति उक्तवान् पेट्टालः।

"एतस्मिन् व्यवहारे भवतः प्रवेशः मास्तु। मां बन्धविमुक्तं करोतु। ततः स्वकार्यं पश्यतु च" इति उक्तवान् राक्षसः।

"एवं वा?" इति वदन् पेट्टालः दृढेन दण्डेन स्यूतस्य उपरि निरन्तरं ताडितवान्।

नरकलोकाधिपतेः तस्य राक्षसस्य शरीरपीडा तदीये लोके कथमपि न भवति स्म। यदा मानवलोकः प्रविष्टः तदा अत्रत्यः एव शरीरधर्मः प्राप्तः आसीत् तेन। अतः पेट्टालस्य प्रहारतः महतीं वेदनां प्राप्नोति स्म सः। वेदनां सोढुम् अशक्नुवन् सः क्रन्दति स्म, इतस्ततः लुण्ठनं करोति स्म, दैन्येन बन्धविमोचनं प्रार्थयति स्म। "यदि भवान् मां बन्धविमुक्तं कुर्यात् तर्हि राजकुमारीविषयं परित्यज्य मम लोकं गमिष्यामि" इति उक्तवान् सः।

"अये, पत्रे बलात्कारेण राज्ञः हस्ताङ्कनं प्राप्तवतः भवतः वचने न कोऽपि विश्वासः मम। 'राजकुमारीं न पीडयिष्यामि' इति





लिखितं पत्रं सज्जाकृतम् अस्ति मया। दक्षिणहस्तमात्रं बहिः प्रसार्य पत्रे हस्ताङ्कनं करोतु। तदनन्तरं भवतः विमोचनं भविष्यति'' इति उक्तवान् पेट्टालः।

अनन्तरं राक्षसस्य हस्ताङ्कनं प्राप्य राक्षसं बन्धविमुक्तं कृतवान् सः। राक्षसः नक्षत्ररूपं प्रप्य गवाक्षमार्गेण स्वलोकं गतवान्।

पेट्टालस्य कार्येण नितरां सन्तुष्टः अभवत् राजा। सः राजसभायां पेट्टालस्य साहसं निवेद्य विविधैः उपायनैः तं सत्कृतवान्।

राजप्रासादस्य सत्कारादिकार्यं समाप्य पेट्टालः ततः निर्गतवान्। देशाटने तस्य रुचिः नास्ति इदानीम्। योग्ये स्थले वासः करणीयः इति इष्टवान् सः। उत्तमस्थलस्य अन्वेषणं कुर्वन् सः नदीतीरे स्थितम् एकं सुन्दरं कुटीरं दृष्टवान्। तत्र कोऽपि न दृश्यते स्म। केनचित् तत्र वासं कृत्वा निर्गतम् इति तु दर्शनात् ज्ञायते स्म।

अत्रैव वासः उचितः इति निश्चित्य पेट्टालः तत्र वासम् आरब्धवान्। गृहकृत्यादि-निमित्तम् उभौ सेवकौ नियोजितवान् सः। आजीवनम् अत्रैव वासः करणीयः इति तस्य सङ्कल्पः।

कानिचन वर्षाणि अतीतानि। कदाचित् नूतनः कश्चित् तस्य गृहस्य समीपम् आगतवान्। सः कृष्णवर्णेन शोभते स्म। तस्य मुखे चिन्तारेखाः दृश्यन्ते स्म।

''कः भवान्?'' इति तं पृष्टवान् पेट्टालः।

''अहम् अस्मि मृत्युदेवः'' इति उक्तवान् सः नूतनः।

''एवं वा?'' इति वदन् पेट्टालः झटिति स्यूतस्य मुखम् उद्घाट्य 'अन्तः पततु' इति उक्तवान्। मृत्युः स्यूते पतितः। अर्धं वर्षं यावत् सः स्यूते आसीत्। तावत् पेट्टालः मृत्युदेवं किञ्चिदपि न पीडितवान्, अपि तु स्नेहेन एव वार्तालापं कृतवान्। मृत्युदेवः 'लोककल्याणार्थं एव प्राणापहरणं क्रियते। अतः अहम् अपराधी न' इति बहुधा प्रार्थितवान्। किन्तु पेट्टालः तस्य बन्धात् विमोचनं न अङ्गीकृतवान्।

एतस्य कारणतः षट्सु मासेषु लोके कोऽपि न मृतः। ये आसन्नमरणाः आसन् ते अपि न मृताः। अपघातादिषु तीव्रं ये व्रणिताः ते अपि न मृताः। युद्धादिषु अपि कस्यापि मरणं न जातम्। तीव्रं व्रणिताः बहवः– "अये मृत्युदेव! नयतु अस्मान्। वेदनां सोढुं न शक्नुमः वयम्" इति क्रन्दनं कुर्वन्तः रोदनं कृतवन्तः।

स्यूतस्थः मृत्युदेवः पुनरपि पेट्टालं प्रार्थितवान्। "मित्र! मरणं यदि न स्यात् तर्हि लोकयात्रा न प्रचलेत्। लोके वृद्धाः महाव्याधिना पीड्यमानाः, कष्टजीविनः, व्रणिताः इत्यादयः बहवः सन्ति। तेषां जीवने मरणम् एव शरणम्। अन्यच्च लोके मरणम् एव न भवति चेत् नूतनतया जननम् अपि न भवति" इति उक्तवान्। तदा पेट्टालः मृत्युदेवस्य बन्धात् विमोचनम् अङ्गीकृत्य– "यावत् अहं न आह्वयामि तावत् मम समीपं न आगच्छतु" इति उक्त्वा मृत्युदेवं ततः प्रेषितवान्।

बन्धतः विमोचनं प्राप्य मृत्युदेवः वेगेन स्वस्य कार्यम् आरब्धवान्। अतः कांश्चन मासान् यावत् लोके व्याधयः, अपघाताः, युद्धानि च अधिकतया प्रवृत्तानि। असङ्ख्याः जनाः मरणं प्राप्तवन्तः। किन्तु पेट्टालः चिरकालं यावत् जीवितवान्।

पेट्टालस्य इदानीं जीवने निरासक्तिः। मित्राणि, पुत्राः, पौत्राः च मरणं प्राप्तवन्तः



सन्ति। राजा तस्य पुत्री चापि मरणं प्राप्तवन्तौ आस्ताम्। अन्यस्य राज्ञः शासनं प्रचलत् आसीत्। पेट्टालः सेवकम् आज्ञापितवान् यत् मृत्युम् अत्र आनयतु इति।

कस्यचित् प्राणान् नेतुम् भूलोकम् आगतः मृत्युदेवः पेट्टालस्य सेवकस्य मुखात् सर्वं श्रुत्वा– "पेट्टालस्य छायाम् अपि न स्पृशामि अहम्" इति उक्तवान्।

सेवकस्य मुखतः सर्वं श्रुत्वा पेट्टालः– "वराकः सः मृत्युः स्यूते एव स्थापनीयः आसीत्" इति वदन् कोपेन स्यूतं समुद्रे क्षिप्तवान्।

'मृत्युदेवः मम प्राणान् नेतुं सिद्धः नास्ति। अतः मया सशरीरं स्वर्गः नरकं वा गन्तव्यम्'

इति निश्चितवान् पेट्टालः।

'उत्तमानि कार्याणि बहूनि अकृतवतः मम निमित्तं स्वर्गे स्थलं न स्यात्' इति आलोच्य सः साक्षात् नरकलोकं गत्वा द्वारताडनशब्दं कृतवान्। पेट्टालः आगतः इति वार्तां दूतमुखात् ज्ञात्वा नरकाधिपतिः राक्षसः भटान् आज्ञापितवान्– "तम् अन्तः न आनयन्तु। सम्यक् ताडयित्वा इतः प्रेषयन्तु" इति। भटाः तथैव कृतवन्तः।

'इतःपरं नान्या गतिः, ऋते स्वर्गगमनात्' इति निश्चित्य स्वर्गद्वारसमीपं गतवान् पेट्टालः। 'स्वर्गाधिपतिं पृष्ट्वा आगच्छामि' इति उक्त्वा द्वारपालकः अन्तः गतवान्। तदा पेट्टालः स्वर्गावरणभित्तिम् आरुह्य अन्तः विद्यमाने उद्याने स्वशिरस्त्रं पातितवान्। द्वारसमीपे यथापूर्वम् उपविष्टवान् च।

द्वारपालकः बहिः आगत्य– "मित्र! भवान् अन्तः प्रेषयितुं न शक्यः इति स्वर्गाधिपतेः आज्ञा। भवान् नरकाधिपतिं राक्षसं दण्डितवान् इत्यादिकं तु सत्यम् एव। तथापि स्वर्गवासं प्राप्तुं यावत् आवश्यकं तावत् पुण्यं न सम्पादितं भवता " इति उक्तवान्।

"एवं वा? अस्तु तावत्। किन्तु शिरोभारकारणतः अहम् असहनया शिरस्त्रं पार्श्वे क्षिप्तवान्। तत् अन्तः पतितम्। तत् आनेतुं वा अवकाशं ददातु कृपया" इति प्रार्थितवान् पेट्टालः।

"अस्तु, नयतु तावत्" इति उक्तवान् द्वारपालकः। पेट्टालः अन्तः गत्वा शिरस्त्रस्य उपरि उपविष्टवान्। "मम शिरस्त्रस्य उपरि अहम् उपविष्टवान् अस्मि। शिरस्त्रं मदीयम्। तत् मदधीनं कृतवान् अस्मि। इतः परम् अहम् इतः कुत्रापि न गच्छामि" इति द्वारपालकम् उक्तवान् सः।

सेवकः अन्तः गत्वा स्वर्गाधिपतिं सर्वं निवेदितवान्। "स्वर्गे अल्पं स्थलं लब्धं चेदपि स्वर्गवासः प्राप्तः इव। यतः स्वर्गे काऽपि सीमा मितिः वा न भवति। अतः सः स्वर्गे तिष्ठतु नाम" इति उक्तवान् स्वर्गाधिपतिः।



# प्रकृतिवैचित्र्याणि—

## वेगेन वर्धन्ते वेणवः

थायूल्याण्ड्, मलेशिया, इण्डोनेशिया इत्यादिषु दक्षिणपूर्वैशियादेशेषु जातिविशेषे जाताः वेणवः बहुशीघ्रम् उन्नततया वर्धन्ते, येषां वर्धनवेगः आश्चर्यजनकः भवति। भारते वेणवः षट्सु सप्तसु वा सप्ताहेषु एकमीटर्दीर्घं वर्धन्ते चेत् पूर्वोक्तेषु देशेषु तावद्दीर्घं वर्धनं २४ घण्टासु जातं दृश्यते।





## अपायस्य पूर्वसूचना

प्राकृतिकवैपरीत्यस्य सूचनां बहुपूर्वम् एव प्राप्य स्वव्यवहारेण मानवान् स्वरक्षणार्थं प्रेरयतां पशुपक्षिणां विषयः अस्माभिः श्रुतः एव स्यात्। केचन जन्तवः भूकम्प-झञ्झावात-ज्वालामुखी-विस्फोटादीन् बहुपूर्वम् एव कथमपि ज्ञातुं शक्नुवन्ति। 'जेल्ली-फिश्' नाम्ना ख्याताः केचन मीनाः १५ घण्टाभ्यः पूर्वम् एव झञ्झावातसम्भवं जानन्तः तीरभागतः गभीरभागं गच्छन्ति। गभीरभागे स्थिताः मीनाः च तदा उपरितनभागं प्राप्नुवन्ति। जपानदेशे मत्स्यागारे पाल्यमानाः मीनाः पूर्वम् एव भूकम्पसम्भवसूचनां प्राप्य परस्परं घट्टनं कुर्वन्तः जले सञ्चरन्ति।

## वल्मीकपर्वतः

पुत्तिकाभिः निर्मिताः वल्मीकाः कदाचित् पर्वताका ण दृश्यन्ते। केचन वल्मीकाः २१ द्वादशाङ्गुलं (७ मीटर्) यावत् उन्नताः भवन्ति। पुत्तिका तु अल्पाकारिका खलु? पुत्तिकायाः दृष्ट्या एषः वल्मीकः हिमालयसदृशः स्यात् खलु?



# प्रवासार्थं गतः आसम्

| | | |
|---|---|---|
| I– | प्रवासार्थं गतः आसीत् इति वार्ता श्रुता। कदा प्रत्यागतः? | I was told, you were away on a tour. When did you come back? |
| II– | परह्यः प्रत्यागतः। | The day before. |
| I– | कुत्र कुत्र गतवान् भवान्? | Which are the places you visited? |
| II– | द्वित्राणां दिनानां विरामं स्वीकृत्य पत्न्या सह देहलीं गत्वा सर्वं दृष्ट्वा आगतवान्। | Obtained leave for a couple of days and went to Delhi with my wife. |
| I– | तन्नाम केवलं देहलीनगरं दृष्ट्वा प्रत्यागतम्? | Went to Delhi, that is all? |
| II– | तथा न। समीपस्थानि कानिचन अन्यानि स्थलानि अपि दृष्टानि। | No, went to some of the nearby places also. |
| I– | मथुरां गतवान् वा भवान्? | Went to Mathura? |
| II– | आं, गतवान्। दर्शनीयं स्थलं तत्। | Yes, went there. It is a place worth visiting. |
| I– | आगरानगरम् अपि गतवान् स्यात् भवान्। | Went to Agra also perhaps? |
| II– | आम् तत्रापि गतवान्। | Yes, went there as well. |
| I– | अयोध्या दृष्टा वा? | Did you go to Ayodhya? |
| II– | आम्। अयोध्या अपि दृष्टा। | Yes, went to Ayodhya too. |
| I– | प्रयाणे कुत्रापि क्लेशः तु न अनुभूतः खलु? | I hope you had no difficulty of any sort during the tour? |
| II– | विशेषक्लेशः कुत्रापि न अनुभूतः। | No. We had no difficulty whatever. |

* * *

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

**विजितां शीर्षिकां सप्टम्बर्-९२ मासे प्रकटयिष्यामः।**



M.C. Morabad



Devidas Kasbekar

*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जुलै-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु-५६००८५**

---

## 'मे'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **प्रीत्या श्रुते तु गीतं मधुरम्।**

द्वितीयचित्रम् - **बलात् हृते तु पयोऽपि गरलम्।**

प्रेषकः - एच्.आर्. चन्द्रशेखरः, तिलिके, अगलगण्डि, कोप्प, चिक्कमगलूरु-५७७१३१,




**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**


---

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अग्रणीः - | Leader |
| अधीतम् - | Was read |
| अपनीय - | Having thrown |
| आस्था - | Interest |
| उत्तानम् - | With the face upwards |
| उत्पीठिका - | Table |
| उन्मत्तः - | Mad man |
| उपनेत्रम् - | Spectacles |
| उपवृत्तिः - | Side business |
| क्रन्दति - | Weeps |
| क्रीडाङ्गणम् - | Playground |
| गवाक्षः - | Window |
| चञ्चूः - | Beak |
| जातकम् - | Horoscope |
| दायित्वम् - | Responsibility |
| ननान्दा - | Husband's sister |
| निगृहीतः - | Was controlled |
| निर्बन्धुम् - | To compel |
| नीडम् - | Nest |
| पिहितम् - | Closed |
| पुत्तिका - | White-ant |
| प्राप्तवयस्कः - | Adolescent |
| भृतिः - | Daily wage |
| वल्मीकः - | Ant-hill |
| वस्तुतः - | In fact |
| विग्रहः - | Idol |
| विच्छिद्य - | Having torn |
| वितानम् - | Pandall |
| विभ्रमः - | Astonishment |
| वेणुः - | Cane |
| शयानः - | Asleep |
| शावकः - | The young of an animal |
| शिरस्त्रम् - | Cap |
| शिलालेखः - | A stone inscription |
| सचेतनः - | Conscious |
| सन्नद्धः - | In readiness |
| सप्ताहः - | Week |
| संविधानम् - | Constitution |
| स्तम्भः - | Pole |
| स्यूतः - | Bag |

